# PURNAPRAJNA DARSHANA

OR

THE BRAMHA SUTRAS OF VYASA

WITH THE COMMENTARY

OF

# ANANDA TIRTHA

EDITED

BY

PANDIT JIBANANDA VIDYASAGARA B. A.
Superintendent Free Sanskrit College.



CALCUTTA;

SECOND EDITION.

PRINTED AT THE SARASWATI PRESS.

1883

To be had from Pandit Jibananda Vidyasagara, B. A.
Superintendent, Free Sanskrit College, Calcutta.



# एतानि मुद्रितसंस्कृतपुस्तकानि

| | |
|---|---|
| १ आशुबोध व्याकरणम् | १।० |
| २ धातुरूपादर्शः | २ |
| ३ शब्दस्तोम महानिधिः | १० |
| ४ सिद्धान्तकौमुदी सरला सहिता | ११ |
| ५ सिद्धान्तबिन्दुसार (वेदान्त) | ॥ |
| ६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) | ४ |
| ७ सयाम्नाद्धादि पद्धतिः | १ |
| ८ शब्दार्थरत्नम् | ॥। |
| ९ वाक्यमञ्जरी (वङ्गाक्षरैः) | । |
| १० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक | ।⁄ |
| ११ वेणीसंहार नाटक सटीक | १ |
| १२ मुद्राराक्षस नाटक सटीक | १। |
| १३ रत्नावली नाटिका सटीक | ॥। |
| १४ मालविकाग्निमित्र सटीक | १॥ |
| १५ धनञ्जय विजय सटीक | । |
| १६ महावीरचरितनाटक | १। |
| १७ साङ्ख्यतत्त्वकौमुदी सटीक | २ |
| १८ वैयाकरणभूषणसार | ॥⁄ |
| १९ लीलावती | ॥। |
| २० बीजगणित | १ |
| २१ शिशुपालवध सटीक (माघ) | ४ |
| २२ किरातार्जुनीय सटीक | २॥ |
| २३ कुमारसम्भव पूर्वखण्ड सटीक | ॥। |
| २४ कुमारसम्भव उत्तरखण्ड | ॥ |
| २५ अष्टकम् पाणिनीयम् | ॥। |
| २६ वाचस्पत्यम् (वृहदभिधान) | १२० |
| २७ कादम्बरी सटीक | ४ |
| २८ शब्दशक्ति | ६ |
| २९ अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ३० ३० सर्वदर्शनसंग्रहः | १ |
| ३१ भामिनीविलास सटीक | १ |
| ३२ हितोपदेश सटीक | १ |
| ३३ भाषापरिच्छेदमुक्तावलीसहित | १ |
| ३४ वङ्गविवाहवाद | ।० |
| ३५ दशकुमारचरित सटीक | १॥ |
| ३६ परिभाषेन्दुशेखर | ॥⁄ |
| ३७ कविकल्पद्रुम धातुपाठः | ॥ |
| ३८ चक्रदत्त (वैद्यक) | २॥ |
| ३९ उणादिसूत्र सटीक | २ |
| ४० मेदिनीकोष | १ |
| ४१ पञ्चतन्त्रम् | २॥ |
| ४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) | ॥ |
| ४३ माधवचम्पू | ।⁄ |
| ४४ तर्कसंग्रह | ॥ |
| ४५ प्रसन्नराघव नाटक | १ |
| ४६ विवेकचूडामणि | ।⁄ |
| ४७ काव्यसंग्रह (सम्पूर्ण) | ५ |
| ४८ लिङ्गानुशासन सटीक | । |
| ४९ ऋतुसंहार सटीक | ।⁄ |
| ५० विक्रमोर्वशी (सटीक) | १॥ |
| ५१ वसन्ततिलक भाण | ।= |
| ५२ गायत्री व्याख्या | ॥० |
| ५३ सांख्यदर्शन (भाष्यसहित) | |
| ५४ भोजप्रबन्ध | ॥।० |
| ५५ नलोदय सटीक | ।⁄ |
| ५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य) | ५ |
| ५७ छान्दोग्य सटीक सभाष्य | ५ |
| ५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक | ३ |

# पूर्णप्रज्ञदर्शनम्।

श्रीमदानन्दतीर्थभगवत्-

पूज्यपादविरचितभाष्यसमेतम्।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागरभट्टाचार्य्येण

संस्कृतं प्रकाशितम्।

कलिकातानगर्य्याम्।

सरस्वतीयन्त्रे मुद्रितम्।

इं १८८२।

# पूर्णप्रज्ञदर्शनम् ।

ओं । अथातो ब्रह्मजिज्ञासा । ओं ॥ १ ॥

नारायणं गुणैः सर्वैरुपेतं दोषवर्जितम् ।
ज्ञेयं गम्यं गुरूंश्चापि नत्वा सूत्रार्थ उच्यते ।

द्वापरे सर्वत्र ज्ञान आकुलीभूते तन्निर्णयाय ब्रह्मरुद्रेन्द्रादिभिरर्थितो भगवान्नारायणः व्यासरूपेणावततार । अथेष्टानिष्टप्राप्तिपरिहारेच्छूनां तद्योगमविजानतां तज्ज्ञापनार्थं वेदमुत्सन्नं व्यञ्जयंश्चतुर्धा व्यभजत्, चतुर्विंशतिधा एकशतधा सहस्रधा द्वादशधा च । एवं तदर्थनिर्णयाय ब्रह्मसूत्राणि चकार । तच्चोक्तं स्कान्दे——

'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् । किञ्चित्तदन्यथा जातं त्रेतायां द्वापरे स्थितम् । गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते । सङ्कीर्ण-बुद्धयो देवा ब्रह्मरुद्रपुरःसराः । शरण्यं शरणं जग्मुर्नारायणमनामयम् । तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः । अवतीर्णो महायोगी सत्यवत्यां पराशरात् । उत्सन्नान् भगवान्

वेदानुज्जहार हरिः स्वयम् । चतुर्द्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः । शतधा चैकधा चैव तथैव च सहस्रधा । कृष्णो द्वादशधाचैव पुनस्तस्यार्थवित्तये । चकार ब्रह्मसूत्राणि तेषां सूत्रत्वमञ्जसा । अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः । निर्विशेषितसूत्रत्वं ब्रह्मसूत्रस्य चाप्यतः । यथा व्यासत्वमेकस्य कृष्णस्यान्यविशेषणात् । सविशेषणसूत्राणि ह्यपराणि विदो विदुः । मुख्यस्य निर्विशेषेण शब्दोऽन्येषां विशेषतः । इति वेदविदः प्राहुः शब्दतत्त्वार्थवेदिनः । सूत्रेषु येषु सर्वेषु निर्णयः समुदीरितः । शब्दजातस्य सर्वस्य यत्प्रमाणस्य निर्णयः । एवंविधानि सूत्राणि कृत्वा व्यासो महायशाः । ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु । ज्ञानं संस्थाप्य भगवान् क्रीड़ते पुरुषोत्तमः'—इत्यादि ।

'अथ'-शब्दो मङ्गलार्थोऽधिकारानन्तर्य्यार्थश्च । 'अतः' शब्दो हेत्वर्थः । उक्तञ्च गारुडे

'अथातः शब्दपूर्वाणि सूत्राणि निखिलान्यपि । प्रारभन्ते नियत्यैव तत् किमत्र नियामकम् । कश्चार्थस्तु तयोर्विद्वन्! कथमुत्तमता तयोः । एतदाख्याहि मे ब्रह्मन्! यथा ज्ञास्यामि तत्त्वतः । एवमुक्तो नारदेन ब्रह्मा प्रोवाच सत्तमः । आनन्तर्य्येऽधिकारस्य मङ्गलार्थे तथैव च । अथ शब्दस्त्वतः शब्दो हेत्वर्थे समुदीरितः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत् । स हि सर्वमनोवृत्तिप्रेरकः समुदीरितः । सिद्धयोः परमाद्विष्णोः प्रसन्नं

ही विनिःसृतौ। ओङ्कारश्चाथशब्दश्च तस्मात् प्राथमिकौ क्रमात्। तद्धेतुत्वं वदंश्चापि तृतीयोऽत उदाहृतः। अकारः सर्ववागात्मा परब्रह्माभिधायकः। तथा प्राणात्मको ज्ञेयो व्याप्तिस्थितिविधायकः। अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः। अथातःशब्दयोरेवं वीर्यमाम्नाय तत्त्वतः। सूत्रेषु तु महाप्राज्ञास्तावेवादौ प्रयुञ्जते'—इति। अधिकारश्चोक्तो भार्गवतन्त्रे—

'मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिणः। तत्र मन्दा मनुष्येषु य उत्तम गुणा मताः। मध्यमास्त्वृषिगन्धर्वा देवास्तत्रोत्तमा मताः। इति जातिकृतो भेदस्तथाऽन्यो गुणपूर्वकः। भक्तिमान् परमे विष्णौ यस्त्वध्ययनवाञ्चरः। अधमः शमसंयुक्तो मध्यमस्तमुदाहृतः। आब्रह्मस्तम्भपर्यन्तमसारञ्चाप्यनित्यकम्। विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः। स उत्तमोऽधिकारी स्यात् संन्यस्ताखिलकर्मवान्।'—इति।

'अध्ययनमात्रवतो नाविशेषादिति चोपरि'—'शान्तो दान्तोपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्'— 'नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्'— 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्'—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्था प्रकाशन्ते महात्मनः।'—इत्यादिश्रुतिभ्यश्च। व्याससंहितायाञ्च—

'अन्त्यजा अपि ये भक्ता नामज्ञानाधिकारिणः।

स्त्रीशूद्रद्विजबन्धूनां तन्त्रज्ञानेऽधिकारिता । एकदेशे शरीरे तु न तु ग्रन्थपुरःसरे । त्रैवर्णिकानां वेदोक्ते सम्यग्भक्तिमतां हरौ । आहुरप्युत्तमस्त्रीणामधिकारन्तु वैदिके । यथोर्वशी यमी चैव शच्याद्याश्च तथापरा' – इति । यतो नारायणप्रसादमृते न मोक्षः – न च ज्ञानं विनात्यर्थप्रसादः – अतो ब्रह्मजिज्ञासा कर्त्तव्या ॥

'यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् । वाक्यञ्चेति सतां नीतिः सावकाशे न तद्भवेत्' इति बृहत्संहिताम् ।

'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनाय ।' – 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' – 'यमेवैष वृणुते तेन लभ्यः' – 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' – इत्यादिश्रुतिस्मृतिभ्यः ।

'कर्म्मणा त्वधमः प्रोक्तः प्रसादः श्रवणादिभिः । मध्यमो ज्ञानसम्पत्त्या प्रसादस्तूत्तमोत्तमः । प्रसादात्त्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्त्तितः । मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिदः । श्रवणं मननञ्चैव ध्यानं भक्तिस्तथैव च । साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते । न चैतानि विना कश्चिज्ज्ञानमाप कुतश्चन' इति नारदीये । 'ब्रह्म' शब्दश्च विष्णावेव –

'यमन्तःसमुद्रे कवयो वयन्ति तदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती प्रसूतो येन सर्वान् विससर्ज भूम्याम्' इति चोक्ता, – 'तदेव ओं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिः । तन्नो विष्णुरितिवचनाद्विष्णुरेव हि तत्रोच्यते, न चेतरस्य शब्दात् प्राप्तिः ।

'नामानि विश्वानि न सन्ति लोके यदाविरासीदन्तस्य सर्वम्। नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति भाल्लवेयश्रुतिः।

'यो देवानां नामधा एक एव तं संप्रश्नं भुवनानि यन्तीत्येव शब्दान्नान्येषां सर्वनामता।' 'अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुरिति' विष्णोर्हि लिङ्गम्। न च प्रसिद्धार्थं विनान्योऽर्थो युज्यते अजस्य नाभाविति।

'यस्यानाभिरभूत् श्रुतिः पुष्करं लोकसारम्।' तस्मै नमो-व्यस्तसमस्तविश्वविभूतये जगद्धात्रे विष्णवे लोककर्त्रे' इति स्कान्दे।

'परो दिवा पर एना पृथिव्येति' समाख्या श्रुतौ—'यं कामयेत तमुग्रं कृणोमि'—'तं ब्रह्माणं तमृषिं तं सुमेधामित्युक्त्वा मम योनिरप्स्वन्तः समुद्रः'—इत्याह। 'उग्रो रुद्रः समुद्रेऽन्तर्नारायणः प्रसिद्धत्वात् सूचितत्वाच्चास्यर्थस्य—नचाविरोधे प्रसिद्धिः परित्यज्यते—उक्तन्यायेन च श्रुतय एतमेव वदन्ति।'

'वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते'—इति श्रीहरिवंशेषु।

नचेतरग्रन्थैर्विरोधः—'एष मोऽहं सृजाम्याशु यो जनान् मोहयिष्यति। त्वञ्च रुद्र महाबाहो! मोहशास्त्राणि कारय। अतथ्यानि वितथ्यानि दर्शयस्व महाभुज!। प्रकाशं कुरु चात्मानमप्रकाशञ्च मा कुरु'—इति वाराहवचनात्।

## ओं । जन्माद्यस्य यतः इति । ओं ॥ २ ॥

शैवे च स्कान्दे। 'श्वपचादपकृष्टत्वं ब्रह्मेशानादयः सुराः । तदैवाच्युतयान्त्येव यदैव त्वं पराङ्मुखः' इति ।

ब्राह्मे च ब्रह्मवैवर्त्ते—'नाहं न च शिवोऽन्ये च तच्छक्त्येकांशभागिनः । बालः क्रीड़नकैर्यद्वत् क्रीड़तेऽस्माभिरच्युत !' —इति । न च वैष्णवेषु तथा तत्रैष मोहमित्युक्तम् ॥ १ ॥

ब्रह्मणो लक्षणमाह—जन्मेति । सृष्टिस्थिति संहारनियमनज्ञानाज्ञानबन्धमोक्षाः यतः । 'उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात् स हरिरेकराड़िति' स्कान्दे । 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति'-'य उनिधात्तु पृथिवीमुतद्यामेको दधार भुवनानि विश्वा चतुर्भिः साकं नवतिञ्च नामभिश्चक्रं न वृत्तं व्यतीरवोवियत्परो मात्रया तन्नावृधाना न ते महित्वमन्वुवन्ति, न ते विष्णो जायमानो न जातो देवमहिम्ना परमं तमाय ।'—'यो नः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वेत्यादि च ।' अनुमानतोऽन्ये न कल्पनीयाः ।

'नावेदविन्मनुते तं वृहन्तं सर्वानुभूतमात्मानं सम्परा ये औपनिषदं पुरुषम्'—इत्यादिश्रुतिभ्यः, न चानुमानस्य नियतप्रामाण्यम् ।

'श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्चयात् साधयेदर्थं प्रमाणान्तरमेव च । श्रुतिस्मृतिसहायं यत्

ओं। शास्त्रयोनित्वात् इति। ओं ॥ ३॥
ओं। तत्तु समन्वयात्। ओं ॥ ४॥

प्रमाणान्तरमुत्तमम्। प्रमाणपदवीं गच्छन्नात्र कार्य्या विचारणा। पूर्वोत्तराविरोधेन कोऽत्रार्थोऽभिमतो भवेत्। इत्याद्यमूहनं तर्कः शुष्कतर्कन्तु वर्जयेत्'-इत्यादि कौर्म्मे। शक्यत्वाच्चानुमानानां सर्वत्र अप्रामाण्यम्—

'सर्वत्र शक्यते कर्त्तुमागमन्तु विनानुमा। तस्मान्न सा शक्तिमती विनागमसुदीचितुम्'-इति वाराहे। 'रेतो धातुश्च कलिका धृतधूमादिवासनम्। जातिस्मृतिरयस्कान्तः सूर्य्यकान्तोऽम्बुभुक् चणम्। प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम्। मृते कर्म्मनिवृत्तिश्च प्रमाणमितिनिश्चयः' इति मोचधर्म्मवचनान्न नास्तिक्यवादो युज्यते—दर्शनाच्च तप आदिफलस्य ॥ २॥

'ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम्। मूलरामायणञ्चैव शास्त्रमित्यभिधीयते। यच्चानुकूलमेतस्य तच्च शास्त्रम् प्रकीर्त्तितम्। अतोऽन्यग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्'इति स्कान्दे। 'सांख्यं योगः पाशुपतं वेदारण्यकमेव च'इत्यारभ्य वेदपञ्चरात्रयोरैक्याभिप्रायेण पञ्चरात्रस्यैव प्रामाण्यमुक्तमितरेषां भिन्नमतत्वं प्रदर्श्य मोचधर्म्मेष्वपि, शास्त्रं योनिः प्रमाणमस्येति-'शास्त्रयोनिः' अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम्। कुतः? ॥ ३॥

अन्वय उपपत्त्यादिलिङ्गम्, उक्तञ्च बृहत्संहितायाम्—

ओं। ईक्षतेर्नाशब्दम्। ओं ॥५॥

"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये'-इति। उपक्रमादितात्पर्य्यलिङ्गैः सम्यक् निरूप्यमाणे तदेव शास्त्रगम्यम्।

'मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्यते ह्यहम्। इत्यस्या हृदयं साक्षान्नान्यो मद्वेद कश्चन'इति भागवते ॥४॥

ननु 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्धवच्च यत्'-'अवचनेनैव प्रोवाच'-'यद्वाचानभ्युदितं येन वागभ्युद्यते' 'यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्'इत्यादिभिः न तच्छब्दगोचरम्? नेत्याह। 'स एतस्माज्जीवघनात् परात्परं पुरि शयं पुरुषमीक्षते'-'आत्मन्येवात्मनात्मानं पश्येत्' -'विज्ञाय प्रज्ञां कुर्वीत'इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव।

'औपनिषदत्वान्नावचनेनेक्षणम्'-'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्'इत्यादिश्रुतिस्मृतिभ्यश्च।

अवाच्यत्वादिकं त्वप्रसिद्धत्वात्-'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते। पश्यन्तोऽपि न पश्यन्ति मेरोरूपं विपश्चित इतिवत्। अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः। अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेव परं स्मृतम्'इति गारुडे। न चाशब्दत्वमिति प्रसिद्धम्॥५॥

ओं । गौणश्चेन्नात्मशब्दात् । ओं ॥ ६ ॥
ओं । तन्निष्ठस्य मोक्षोपदेशात् । ओं ॥ ७ ॥

न च गौण आत्मा दृश्यो वाच्यश्च, न निर्गुण इति युक्तः — आत्मशब्दात् । 'यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते । एतदन्यस्वभावो यः स नात्मेति सतां मतम् । अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते' इति वामने ।

द्वे वा च ब्रह्मणो रूपे आत्मा चैवानात्मा च, तत्र य आत्मा सः नित्यः शुद्धः केवलो निर्गुणश्चाथ ह योऽनीदृशः स ऽनात्मेति तवल्कार-ब्राह्मणम् । न च मुख्ये सत्यमुख्यं युज्यते ॥ ६ ॥

न हि गौणात्मनिष्ठस्य मोक्षः, यस्यानुवित्तः प्रतिबुद्ध आत्मा तस्मिन् सन्देहे गहने प्रविष्टः स विश्वकृत् स हि सर्वस्य कर्त्ता तस्य लोकः स उ लोक एवेत्यात्मनिष्ठस्य मोक्ष उपदिश्यते — 'अयमात्मा ब्रह्म' ।

'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् । चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्द्दनः । इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते । तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः । सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते । परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः' — इति पाद्मे ॥ ७ ॥

ओं । हेयत्वावचनाच्च । ॥ ८ ॥

ओं । स्वाप्ययात् । ओं ॥ ९ ॥

ओं । गतिसामान्यात् । ओं ॥ १० ॥

ओं । श्रुतत्वाच्च । ओं ॥ ११ ॥

ओं । आनन्दमयोऽभ्यासात् । ओं ॥ १२ ॥

'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथा मृतस्यैष सेतुः' इत्यन्येषां हेयत्ववचनान्न गौण आत्मा ॥ ८ ॥

'पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदुच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' — 'स आत्मना आत्मानमुद्धृत्यात्मन्येव विलापयत्यथा आत्मैव भवति'-स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः । एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्' — इति स्वैव स्वस्मिन्नप्ययवचनात् । न हि गौण आत्मनिर्दोषस्य लयः । न च कासुचिच्छाखास्वन्यथोच्यते ॥९॥

'सर्वे वेदा युक्तयः सुप्रमाणा ब्राह्मं ज्ञानं परमं त्वेकमेव प्रकाशयन्ते न विरोधः कुतश्चिद्देदेषु सर्वेषु तथेतिहास इति पैङ्गिश्रुतेर्गतेर्ज्ञानस्य साम्यमेव ॥ १० ॥

'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता: केवलो निर्गुणश्चेति । न ह्यशब्दः श्रूयते नचाप्रसिद्धं कल्प्यम् सर्वशब्दा वाच्यस्य लक्षणा युक्तः ॥ ११ ॥

'तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना

ओं । विकारशब्दान्नेति चेन्न प्राचुर्य्यात् । ओं ॥१३॥

समस्तेनाध्यायेन प्रायेणाभिप्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे, नान्यथा तद्दृष्टेः । ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तं तच्च 'ब्रह्म पुच्छं प्रतिष्ठे'त्यानन्दमयावयवरूपं प्रतीयते न ह्यवयविनं विनावयवमात्रस्य त्त्वं घतीत्यत आह—आनन्देति । आनन्दमयो ब्रह्मादिप्रकृतिर्विष्णुर्वा, ब्रह्मशब्दाद्धिरण्यगर्भस्य प्राप्तिः, शतानन्दनाम्ना च अप्रीतत्वाच्च रुद्रस्य । एवमन्येषामपि । 'मम योनिर्महद् ब्रह्मेति ब्रह्मशब्दाद्बहुभावाच्च प्रकृतेः ब्रह्म बृहज्जातिजीवकमलासनशब्दराशिष्विति ब्रह्मशब्दादेव सर्वजीवानां अन्नमयत्वादेश्च तथापि न ते आनन्दमय शब्देनोच्यन्ते, किन्तु विष्णुरेव 'तदेव ब्रह्म परमं कवीनाम्' एतमेव ब्रह्मेत्याचक्षते—

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असम्पूर्णः परे यस्मादुपचारेण वा भवेत् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।'—इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥ १२ ॥

विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट् शब्दः न तु परमात्मनः—इति माभूत् प्रचुरानन्दत्वाद्यानन्दमयः न तु तद्विकारत्वात् अन्नादीनाञ्च प्राचुर्य्यमेव अद्यतेऽत्ति चेति व्याख्यानात् तत्प्राचुर्य्यञ्च युज्यते, उपजीव्यत्वमेवाद्यत्वं स वा एष इत्यस्य प्रारम्भात् येऽन्नं ब्रह्मो-

ओं । तद्धेतुव्यपदेशाच्च । ओं ॥ १४ ॥

ओं मान्त्रवर्णिकमेव च गीयते । ओं ॥ १५ ॥

पासत इत्यादि ब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वमविरोधश्च न च पृथक् कल्पना युक्ता स्वरूपश्च युज्यते, प्रचुरप्रकाशो रविरितिवत् ॥ १३ ॥

'को ह्येवान्यात् कः प्राण्यादेष आकाश आनन्दो न स्यात्'इति ॥ १४ ॥

ब्रह्म-विदाप्नोति परमिति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्मेति मन्त्रवर्णे लक्षितमेव ब्रह्म-शब्दानुसन्धानाद्गीयते ।' न चावयवत्व-विरोधः 'स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छमिति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ।

'शिरो नारायणः पक्षो दक्षिणः सव्यएव च । प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः । नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा । पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा । अङ्गाङ्गित्वेन भगवान् क्रीड़ते पुरुषोत्तमः । ऐश्वर्य्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने । अतर्क्ये कुत ह्नि स्तर्कः स्वप्रमेये कुतः प्रमेति ब्रह्म संहितायाम् ।

'रसो वै सः रसं ह्येवायं लब्ध्वानन्दो भवति'-इति रस शब्देन विशेषणात्तत् सारभूतं चिन्मात्रमेवोच्यते । इदमिति च दृश्यमानसन्निहितत्वात् । 'अनन्योऽप्यन्य

**ओं। नेतरोऽनुपपत्तेः। ओं ॥ १६ ॥**

**ओं। भेदव्यपदेशाच्च। ओं ॥ १७ ॥**

शब्देन तथैको बहुरूपवान्। प्रोच्यते भगवान् विष्णुरैश्वर्य्यात् पुरुषोत्तमः' इति ब्रह्माण्डे ॥ १५ ॥

न चोक्त-प्राप्त्याविरिञ्च्यादिरुच्यते। न ह्यन्यज्ज्ञानान्मोक्ष उपपद्यते। 'तमेव विद्वान् मृत इह भवति नान्यः पन्था विद्यते अयनाय' इति ह्युक्तम् ॥ १६ ॥

'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति स यश्चायं पुरुषः,' इत्यादि भेदेन व्यपदेशात्। न च 'तत् त्वमसि'-'अहं ब्रह्मास्मीत्यादि-श्रुतिविरोधः, 'नामानि सर्वाणि यमाविशन्तीति तच्छब्द-वाच्योक्तेः। 'इदं हि विश्वं भगवानिवेतरो यतो जगत्-स्थाननिरोधसम्भवाः। असर्वः सर्व इत्यपि विद्यात्मनि भिदाबोधो भेददृष्टाभिमानेन निःसङ्गेनापि कर्म्मणा। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वाक्यैव सन्नानात्मेव प्रत्यङ्पराङिवैक ईयते बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते।

'एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः। नैतदिच्छन्ति पुरुषमेकं कुरु कुलोद्वह!' इत्यादेश्च। उक्ता च प्राप्तिः ब्रह्मैव, सन्नित्यपि जीव एव, ब्रह्मशब्दः उपपद्यते च विरोधे, प्रमादात्मकत्वाद्बन्धनस्य विमुक्तत्वं च युज्यते 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः' इति भागवते ॥ १७ ॥

ओं । कामाच्च नानुमानापेक्षा । ओं ॥ १८ ॥
ओं । अस्मिन्नस्य च तद्योगं शास्ति । ओं॥१९॥
ओं । अन्तस्तद्धर्मोपदेशात् । ओं ॥ २० ॥

न तत्तदनुमानविरोधः यथाकामं ह्यनुमातुं शक्यते अतो न तत्त्वे पृथगनुमानमपेक्षते । उक्तञ्च स्कान्दे – 'यथाकामानुमा यस्मात्तस्मात् सानपगाश्रुतेः । पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति 'नैषा तर्केण मतिरापनीयेति' च ॥ १८ ॥

अस्य जीवस्य युक्तिसमुच्चये च शब्दः । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता । अनिलयनेऽभयं प्रतिष्ठां विन्दते एतमानन्दमयमात्मानमुपसंक्रामति' इत्यादि ॥ १९ ॥

'अदृश्येऽनात्म्ये इत्युक्तं तच्चादृश्यत्वमन्तःप्रविष्टं कर्त्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं सदैव सन्तं न विजानन्ति देवा इत्यन्तस्थस्य कस्यचिदुच्यते । स चेन्द्रो राजा सप्त युजन्तीत्यादिभिरन्यः प्रतीयते, तस्मात् स एवानन्दमय इति न मन्तव्यम् । अन्तःश्रूयमाणो विष्णुरेव, 'अन्तःसमुद्रे मनसा चरन्तं ब्रह्मान्वविन्दद् दश होतारमर्णसमुद्रेऽन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । यस्याण्डकोषं शुभमाहुः' इत्यादितद्धर्मोपदेशात् । स हि क्षीरसमुद्रशायी, तस्य च वीर्य्यमण्डकोषः-'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्य्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशु-

ओं। भेद-व्यपदेशाच्चान्यः। ओं ॥ २१ ॥

ओं। आकाशस्तल्लिङ्गात्। ओं ॥ २२ ॥

समप्रभम्। यस्मिन् यज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः।' इति व्यास-स्मृतेः। 'अहं तत्तेजो रश्मीन् नारायणं पुरुषं जातमग्रतः। पुरुषात् प्रकृतिर्जगदण्डम्' इति चतुर्वेदशिखायाम् ॥ २० ॥

'इन्द्रस्यात्मा निहितः पञ्च होता वायोरात्मानं कवयो निचिक्युः। अन्तरादित्येन मनसा चरन्तं देवानां हृदयं ब्रह्मान्वविन्दत्' इत्यादिभेदव्यपदेशात् ॥ २१ ॥

'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इत्याकाशस्यानन्दमयत्वे हेतुरुक्तः, न तु विष्णोरिति न मन्तव्यम्। यतः 'अस्य लोकस्य का गतिरित्याकाश इति हो वा चेत्यत्र भूताकाशस्य प्राप्तिः, न चासौ युज्यते, 'किन्तु विष्णुरेव स एष परो वरीयानुद्गीथः: स एषोऽनन्तः' इत्यादि तल्लिङ्गात्। 'विष्णोर्नु कं वीर्य्याणि प्रोवोचं यः पार्थिवानि निर्म्ममे रजांसि परो मात्रया तन्वा वृधानेत्यादिना तस्यैव हि तल्लिङ्गम्। अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः पदैः प्रोच्यते विष्णुरेवैकः परेषामुपचारतः'-इति ब्राह्मे। 'नामानि सर्वाणि यमाविशन्तीति' चोक्तं बहुधैव, 'स पुरुषः स ईश्वरः स ब्रह्म सर्वान्तर्य्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ॥ २२ ॥

ओं। अत एव प्राणः। ओं ॥ २३ ॥
ओं। ज्योतिश्चरणाभिधानात्। ओं ॥२४॥
ओं। छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्। ओं ॥२५॥

'तद्वै त्वं प्राणोऽभवः महान् भोगः प्रजापतेः भुजः करिष्यमाणः यद्देवान् प्राणयो न वेति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तं, स च प्राणः प्रसिद्धो वायुरित्यापतति। न चैवं यतो विष्णुरेव प्राणः अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्या वहो रात्रे पार्श्वे इत्यादि तल्लिङ्गादेव ॥२३॥

'यो वेद निहितं गुहायाम्' इत्युक्तं तच्च गुहानिहितं वि मे कर्णायत वि चक्षुर्वी इदं ज्योतिर्हृदय आहितं यत् वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमुनूमनिष्य इति ज्योतिरुक्तं तज्ज्योतिरग्निसूक्तत्वात् प्रसिद्धस्याग्नेरेवेति प्राप्तम्, अत आह—विष्णुरेव ज्योतिः कर्णादीनां विवरणाभिधानात् स हि परो मात्रया तन्वा वृधानित्यादिना कर्णादिविदूरः ॥ २४ ॥

अथ 'यदतः परो दिवो ज्योतिर्दीप्यत इत्युक्तस्य ज्योतिषो गायत्री वा इदं सर्वमिति गायत्र्या समारम्भः कृतः, तस्मान्न विष्णुरिति चेत्—न तथा चेतोऽर्पणार्थं हि विनिगद्यते अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोऽर्पणार्थं हि निगद्यते। तथाहि—दर्शनं गायति चेत्यादि

ओं। भूतादि-पाद-व्यपदेशोपपत्तेश्चैवम्। ओं ॥ २६ ॥

ओं। उपदेश-भेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्। ओं ॥ २७ ॥

ओं। प्राणस्तथानुगमात्। ओं ॥ २८ ॥

सर्वच्छन्दोऽभिधो ह्येष सर्ववेदाभिधो ह्यसौ सर्वलोकाभिधो ह्येष तेषां तदुपचारतः' इति वामने ॥ २५ ॥

'एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति। 'सुवर्णकोषं रजसा परीवृतं देवानां वसुधा नीविराजं अमृतस्य पूर्णान्तासुपकलां विचक्षते। पादं षड्ढो रुर्णकिलाविविक्त इति श्रुतेः। 'तस्मिन् काले महाराजो राम इत्यभिधीयते। तथापि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति च स्कान्दे॥२६॥

'त्रिपादस्यामृतं दिवीति पूर्वोपदेशः, 'परोदिव-इति पञ्चम्यन्तः पश्चिमः। तस्मान्नैकं वस्त्वनोच्यते इति चेत् – न त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

'प्राणो विष्णुः' इत्युक्तं तत्र 'ता शीर्षं श्रियः श्रिताश्च ह्यः श्रोत्रं मनो वाक् प्राण' इत्यत्र प्राणस्य विष्णुत्वं न विद्यते, इन्द्रियैः सहाविधानादित्यत आह' 'तं देवाः प्राणयन्तः स एषोऽसुः स एष प्राणः प्राणा ऋच इत्येव विद्यात् तदयं प्राणोऽधितिष्ठतीत्याद्यनुगमादत्रापि प्राणो

ओं। न वक्तुरात्मोपदेशादिति चेदध्यात्म-सम्ब-
न्धभूमाह्यस्मिन्। ओं ॥२९॥

ओं। शास्त्र-दृष्ट्या तूपदेशो वामदेववत्।
ओं ॥३०॥

ओं। जीव-मुख्य-प्राणलिङ्गान्नेति चेन्नोपास-

विष्णुरेव। 'विष्णुमेवानन्दयन्देवा विष्णुं भूतिमुपासते। स एव सर्ववेदोक्तस्तद्रयो देह उच्यते'-इति स्कान्दे ॥२८॥

ब्रह्मशब्दानुगमाच्च। 'प्राणो वा अहमस्मृश' इति पाद्मे वक्तुरात्मोपदेशादिन्द्र एवेति चेत्—न, 'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इतिवदध्यात्मसम्बन्धो ह्यत्र विद्यते ॥२९॥

शास्त्रमन्तर्यामी 'संविच्छास्त्रं परं पदम्' इति हि भागवते। 'तत्तन्नाम्नोच्यते विष्णुः सर्वं शास्त्रस्य हेतुतः। न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' इति च पाद्मे ॥३०॥

'अहं मनुरभवं सूर्य्यश्चेत्यादिवत्। तावन्ति शतसंवत्-सरस्याह्नां सहस्राणि भवन्तीति जीवस्य लिङ्गम्। प्राण-सर्वादिमुख्यप्राणलिङ्गं तस्मान्नेति चेत् न, अन्तर्बहिः सर्वगतत्वे नेत्युपासनात्रैविध्यादिहाश्रितत्वाच्च यत तमेव सीमानं विदार्य्यैतया द्वारा प्रापद्यत स एतमेव पुरुषं ब्रह्म तं तमपश्यत एतद्ध स्म वैतद्विद्वानाह महिदास ऐतरेयः' इत्यादिना महिदासाभिधो यज्ञ इतरायास्तपोबलात्। 'साक्षात् स भगवान् विष्णुर्यस्तन्त्रं वैष्णवं व्यधात् इति' च

नाचैविध्यादाश्रितत्वादिह तद्योगात् । ओं ॥ ३१ ॥

इति वैयासिक ब्रह्मसूत्र प्रथमाध्ययस्य प्रथमः पाद समाप्तः ॥ १अ०, १पा० ॥

---

ओं । सर्व्वत्र प्रसिद्धोपदेशात् । ओं ॥ १ ॥

ब्रह्माण्डे । तत्तदुपासनयोग्यतया च पुरुषाणां केषाञ्चित् सर्वगतत्वेन 'केषाञ्चिद्धृदये हरिः । केषाञ्चिद्दहिरेवस्या-दुपास्यः पुरुषोत्तमः' इति ब्राह्मे । 'अग्नौ क्रियावतां विष्णु-र्योगिनां हृदये हरिः । प्रतिमास्वल्पबुद्धीनां सर्वत्र विदि-तात्मनाम्' इति च ॥ ३१ ॥

इति श्रीमदानन्दतीर्थविरचिते ब्रह्मसूत्रभाष्ये
प्रथमाध्यायस्य प्रथमः पादः समाप्तः ।

---

लिङ्गात्मकानां शब्दानां प्रवृत्तिं विष्णौ दर्शयत्यस्मिन् पादे प्राधान्येन ब्रह्मतत्त्वमिति सर्वगतत्वमुक्तं विष्णोः, तच्च तस्यैतस्यासावादित्यो रस इत्यादिना आदित्यस्य प्रतीयते । अतोऽब्रवीत्—'स यश्चायमशरीरः प्रज्ञा' इत्या-

ओं । विवक्षित-गुणोपपत्तेश्च । ओं ॥ २ ॥

ओं । अनुपपत्तेस्तु न शारीरः । ओं ॥ ३ ॥

ओं । कर्म्म-कर्तृ-व्यपदेशाच्च । ओं ॥ ४ ॥

ओं । शब्दविशेषात् । ओं ॥ ५ ॥

ओं । स्मृतेश्च । ओं ॥ ६ ॥

दिना सर्वैर्वोच्यमानो नारायण एव 'तदेव ब्रह्म परमं कवीनाम् । परमं यो महद् ब्रह्म वासुदेवात् परः को नु ब्रह्मशब्दोदितो भवेत् । स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः' इति तस्मिन्नेव प्रसिद्धः ब्रह्मशब्दोपदेशात् ॥ १ ॥

'मयीतोऽश्रुतो मतः' इत्यादि 'स हि न ते विष्णोर्जायमानो न जातः' इत्यादिना श्रुतत्वादिगुणः । 'स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्यो ऽनन्तः' इत्यादि चतुर्वेदशिखायाम् ॥ २ ॥

न चादित्र-शब्दाच्चक्षुर्भयत्वादेश्च जीव इति वाच्यम्, एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव ॥ ३ ॥

'आत्मानं परस्मै शंसति' इत्यादि ॥ ४ ॥

'एतमेव ब्रह्मेत्याचक्षत इति न हि जीवमेव ब्रह्मेत्याचक्षते । 'एष नु एष ब्रह्मैव उ एवात्मैष उ एवेन्द्रो उ एवहरिर्हरति-परः परमानन्दः' इति चेन्द्रद्युम्नशाखायाम् ॥५॥

'अहमात्मा गुडाकेश सर्वभूताशयस्थितः । गामाविश्य च भूतानि धारयाम्यहमोजसा'-इत्यादि ॥ ६ ॥

ओं। अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च। ओं ॥ ७ ॥

ओं। सम्भोग-प्राप्तिरिति चेन्न वैशेष्यात्। ओं ॥ ८ ॥

ओं। अत्ता चराचर-ग्रहणात्। ओं ॥ ९ ॥

न चाप्रामाणिकं कल्प्यं, सर्वेषु भूतेष्वित्यर्भकौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेत्—न अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् सर्वगतत्वेऽप्यर्भकौकस्त्वं युज्यते च व्योमवत्। 'सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः। सर्वनामाभिधेयश्च सर्ववेदेडितश्च सः' इति स्कान्दे ॥ ७ ॥

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेत्—न, सामर्थ्यवैशेष्यात्। उक्तं हि गारुडे—'सर्वज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः। स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः' ॥ ८ ॥

जन्माद्यस्य यत इत्युक्तं तत्रात्तृत्वं स यद्यदेवासृजत तत्तदत्तुमधीयत सर्वं वा अत्तीति तददितेरदितित्वमित्यदितेः प्रतीयते, स यद्यदेवासृजतेति पुंलिङ्गश्च कूटस्थोऽक्षर उच्यते, इत्यादिवत्। अत्रोच्यते—न हि चराचरस्य सर्वस्यात्तृत्वमदितेः 'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु। वासुदेवः परः पुंसामितरोऽल्पस्य वा न वा' ति स्कान्दे। एकः

ओं । प्रकरणाच्च । ओं ॥ १० ॥

ओं । गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । ओं ॥ ११ ॥

पुरस्ताद्य इदं बभूव यतो बभूवुर्भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये मनोहरिष्टं तमिहायुषेऽत्तुदेवः' इति श्रुतिः ॥ ९ ॥

संवत्सरस्थ्यादिना तत्प्रकरणाच्च 'नेहासीत् किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा । आत्मनो मनसासाक्षीदप एव जनार्द्दनः । अथानस्तासु भगवान्निर्म्ममेऽण्डं महत्तरम् । तत्र संवत्सरं नाम ब्रह्माख्यमसृजत् प्रभुः । तमत्तुं व्याददा वास्यन्तदासौ विष्णुरावह । अथ तत् कृपया विष्णुः सृष्टिकर्म्मण्ययोजयत् । सोऽसृजद् भुवनं विश्वमद्यार्थं हरये विभुः' इति च ब्रह्मवैवर्त्ते ॥ १० ॥

'सर्वात्तैकः पर उक्तः ऋतं पिबन्तौ सुकृतस्य लोके । गुहां प्रविष्टौ परमे परार्द्धे छायातपौ ब्रह्मविदो वदन्ति । पञ्चाग्नयो ये च त्रिणाचिकेता इति पिबन्तौ प्रतीयेते तौ काविति उच्यते, गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव धर्म्माः समन्तात् त्रिवृत्तं व्यापत्तस्तयोर्जुष्टिं मातरिश्वा जगाम' इत्यादिना तद्दर्शनात् । 'आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्म्मजम्' इति बृहत्संहितायाम् । 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः

ओं । विशेषणाच्च । ओं ॥ १२ ॥

ओं । अन्तर उपपत्तेः ओं ॥ १३ ॥

पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्' इति पाद्मे ॥ ११ ॥

'यो वेद निहितं गुहायाम्' इत्यादिना प्रसिद्धं हि शब्देन दर्शयति – 'यः सेतुरीजानामक्षरं ब्रह्म तत् परमिति पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वः । यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् । एतस्माद् ब्रह्म-शब्दोऽयं विष्णोरेव विशेषणम् । 'अमिता हि गुणा यस्मान्नान्येषां तमृते विभुम्' इति ब्राह्मे । न च जीवे समन्वयोऽभिधीयते, 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मे वारुण्यो मे वारुण्यो मे वारुण्यः' इति पैङ्गिश्रुतिः । 'आत्मा हि परमः स्वतन्त्रोऽधिगुणः जीवोऽल्पशक्तिरस्वतन्त्रो वः' इति भाल्लवेयश्रुतिः । 'यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात् । एवमेव हि मे वाचं सत्यां कर्त्तुमिहार्हसि । यथेश्वरस्य जीवस्य सत्यभेदो परस्परम् । तेन सत्येन मां देवा स्त्रायन्तु सह केशवाः' इत्यादेः 'नासत्यो भेद आदित्यः विष्णुः' इत्युक्तम् । 'य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मीत्यादावग्नेर्नामेवादित्यस्थत्वमुच्यते, अतोऽग्न्यादित्ययोरैक्याद् य 'एषोऽन्तरक्षिणि पुरुषो दृश्यत' इत्यत्राप्यग्निरेवोच्यते ॥ १२ ॥

अतस्तद् यथा – पुष्करपलाश आपो नाश्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इत्यादिना ज्ञानादेव सर्व-

**ओं । स्थानादिव्यपदेशाच्च । ओं ॥ १४ ॥**

**ओं । सुख विशिष्टाभिधानादेव च । ओं ॥ १५॥**

**ओं । अतोपनिषत्कगत्यभिधानाच्च । ओं ॥१६॥**

पापाश्लेषान्मोचोपपत्तिरिति । अतोऽब्रवीत् 'चक्षुरन्तस्थो विष्णुरिव त्रिपादस्यामृतं दिवि' इत्यादिना तस्यैवामृतत्वा-द्युक्ती ब्रह्मशब्दाद्युपपत्तेश्च । 'सोऽहमस्मीत्यादि त्वन्तर्याम्य-पेक्षया । अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि । 'सर्वे शब्दाः प्रयुज्यन्ते जातिभेदेऽपि वस्तुषु' इति महाकौर्म्मे ॥१३॥ 'सर्पिर्वोदकं वा सिञ्चति वर्त्मना एव गच्छति' इत्यादि स्थानशक्तिः। 'वामनीर्भामनीः' इत्याद्यात्मशक्तिश्चोच्यते। तस्य ह्येतल्लिङ्गं 'स ईशः सोऽसपत्नः स हरिः स परः स वीरो वरीयान्यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मना एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युतः' इति चतुर्वेदशिखायाम् । स्थानत्वादिदश्चक्षुरसङ्गं सर्व-वस्तुभिः । स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत्' इति वामने ॥ १४ ॥

'प्राणो ब्रह्म, कं ब्रह्म खं ब्रह्मेति विज्ञानमानन्दं ब्रह्म, आनन्दो ब्रह्मेति व्यजानादित्यादेस्तस्यैव तत्तल्लक्षणं लक्षणं परमानन्दो विष्णोरेव न संशयः । अव्यक्तादितृणान्तास्तु विष्णोरानन्दभागिनः' इति ब्रह्मवैवर्त्ते ॥ १५ ॥

न च मुख्ये सत्यमुख्यं युज्यते स एतान् ब्रह्म गमय-तीति ॥ १६

ओं। अनवस्थितेरसम्भवाच्च नेतरः। ओं ॥ १७॥

ओं। अन्तर्याम्यधिदेवादिषु तद्धर्म्मव्यपदेशात्।
ओं ॥ १८॥

ओं। न च स्मार्त्तमतद्धर्म्माभिलापात्। ओं
॥ १९॥

न ह्यन्यविषयान्यगतिर्युक्ता। जीवस्य जीवान्तरः नियामकत्वेऽनवस्थितिः साम्यादसम्भवाच्च न जीवः, नियमप्रमाणाभावादनीश्वरापेक्षत्वाच्च ॥ १७ ॥

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येषात आत्मान्तर्याम्यमृतः' इत्यादिना अन्तर्याम्युच्यते। तत्र चैतदमृतमित्यमृतत्वमुच्यते। स च यस्य पृथिवी शरीरमित्यादिना सर्वात्मकत्वात् प्रकृतिस्तत्त उजीवो वा युक्तः, न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—यं पृथिव्न वेद पृथिव्या अन्तर इत्यादिनाधिदैवादिषु तद्धर्म्मव्यपदेशाद्विष्णुरेवान्तर्यामी। स हि न ते विष्णोऽजायमानो न जातः स योऽन्तोऽच्युतो गतो मतो दृष्टः सर्वेषां भूतानामन्तरं पुरुष इत्यादिना विदितोऽन्तरश्च ॥ १८ ॥

त्रिगुणत्वादि-धर्म्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामी ॥ १९ ॥

ओं । शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।
ओं ॥ २० ॥

ओं । अदृश्यत्वादिगुणको धर्म्मोक्तेः । ओं ॥२१॥

य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष स आत्मान्तर्याम्यमृतः । यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरमित्युभयेऽपि शाखिनो भेदेनैनं जीवमधीयते । 'शीयते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तद्‌ जगत्' इति वचनान्न शरीरत्वविरोधः ॥ २० ॥

अदृश्यत्वादि-गुणा विष्णोरुक्ताः । तत्र यत्तदद्रेश्यमग्राह्यमगोचरमवर्णमचक्षुःश्रोत्रं तदपाणि-पादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा इत्युक्त्वा—अथोर्णनाभिः सृजते गृह्णति च यथा पृथिव्यामोषधयः सम्भवन्ति । अथासतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वमित्युक्त्वा तत्परतः पराभिधानात्तस्माच्चाक्षरात् परतः पर इति परः प्रतीयत इति अतोऽब्रवीत् पृथिव्यादि-दृष्टान्तमुक्त्वा अक्षरात् सम्भवतीह विश्वमित्यतः परं तत्परतः पराभिधानात् कूटस्थो अक्षर उच्यते इति स्मृतेश्च प्रकृतेः प्राप्तिः । अक्षरशब्दात् परतः पराभिधानादेव च हिरण्यगर्भस्य,

ओं। विशेषण-भेद-व्यपदेशाभ्यां च नेतरौ। ओं ॥ २२ ॥

ओं। रूपोपन्यासाच्च। ओं ॥ २३ ॥

तमेव विद्वानमृत इह सम्भवति। तत् कर्म्म हरितोषं यत् सा विद्या तन्मतिर्यया। अथ द्वे वा विद्ये वेदितव्ये परा चैवापरा च। तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि सा परा परा यया हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मेत्यादिना तद्धर्म्मत्वेनावगतपरविद्याविषयोत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥ २१ ॥

यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तप इति विशेषणान्न प्रकृतिः। तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायत इति भेदव्यपदेशान्न विरञ्चिः। 'अपरं त्वक्षरं या सा प्रकृतिर्जड़रूपिका। श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया। तमक्षरं प्राहुः परतः परमक्षरम्। हरिमेवाखिलगुणमक्षरत्रयमीरितम्' इति स्कान्दे। अक्षराभिधानादक्षरात् परतः पर इत्यपि विशेषणमेव। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति भेदव्यपदेशादीशशब्दप्राप्तोऽपि न रुद्रः ॥ २२ ॥

यदापश्यः पश्यतेरुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति। एको नारायण आसीन्न ब्रह्मा न शङ्करः स मुनिर्भूत्वा समचिन्तयत् तत्र ते व्यजायन्त विश्वे हिरण्यगर्भो-

ओं । वैश्वानरः साधारणशब्दविशेषात् । ओं ॥ २४ ॥

ओं । स्मर्य्यमाणमनुमानं स्यादिति । ओं ॥२५॥

ओं । शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते । ओं ॥ २६ ॥

ऽग्निर्यमो वरुण रुद्रेन्द्रा इति तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं नीलं कृष्णमिति । स एतान्येतभ्योभ्यचीक्लपद् विश्वमिश्राणि व्यमिश्रयदत एतादृगेतद्रूपमिति तस्यैव हि रूपाण्यभिधीयते ॥ २३ ॥

अदृश्यत्वादिगुणेषु सर्वगतत्वं यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते इति वैश्वानरस्योक्तमिति अत आह । अग्नाविष्णोः साधारणस्य वैश्वानरशब्दस्य विष्णोरेव प्रसिद्धत्वादात्मशब्देन विशेषणाद् वैश्वानरो विष्णुरेव ॥ २४ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित इति स्मर्य्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकं स्वसमाख्यानात् इति शब्दः समाख्याप्रदर्शकः ॥ २५ ॥

अयमग्निः वैश्वानरः वैश्वानरमृत आजातमग्निम्' इत्यादि शब्दः वैश्वानरे तदुक्तं भवति । हृदयं गार्हपत्यो मनोऽन्वाहार्य्य

ओं। अत एव न देवता भूतञ्च। ओं ॥ २७ ॥

पचनमास्यमाहवनीय इत्याद्यग्निलिङ्गमादिशब्दोक्तम्। येनेदमन्नं पच्यते तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयमित्यादिना पाचकत्वेनान्तः प्रतिष्ठानं प्रतीयते तस्मान्न विष्णुरिति चेत्—न अथ हेममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति सर्वनामा सर्वकर्म्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्म्मः सर्वरूप इति स एतमेवमात्मानं विश्वं हरिमारादरमुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु कामचारो भवति इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि अनात्मत्वादनात्मान ऊनत्वाद्गुणराशितः। अब्राह्मणः परे सर्वे ब्रह्मात्मा विष्णुरेव हीत्यादिना को न आत्मा किं ब्रह्मेत्यारम्भाच्चान्येषामसम्भवाद् विष्णुरेव वैश्वानरः। चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायत इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मेत्यादिनैव वैश्वानरमधीयते। चशब्देन सकलवेदशास्त्रागमतन्त्रयामलपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य सूचयति। यथाहि पाद्मे, 'यथा हि पौरुषं सूक्तं नित्यं विष्णुपरायणम्। तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्' इति ॥ २६ ॥

चतुर्वेदशाखायाञ्च—'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः'

**ओं । साक्षादप्यविरोधं जैमिनिः । ओं ॥२८॥**

**ओं । अभिव्यक्तेरित्याश्मरथ्यः । ओं ॥ २९ ॥**

**ओं । अनुस्मृतेर्बादरिः । ओं ॥ ३० ॥**

इति । बृहत्संहितायाञ्च – 'यथैव पौरुषं सूक्तं विष्णावेवाभिधायिकम् । न तथा सर्ववेदाश्च वेदाङ्गानि च नारद' इत्यादि । यस्माद्यत् जायते चाङ्गाल्लोकवेदादिकं हरेः । तन्नामवाच्यमङ्गं, तद्यथा ब्रह्मादिकं मुखमिति श्रीनारदीयवचनान्न वेदोक्तिविरोधः । अग्निर्वैश्वानरादिशब्दस्तेजसि भूतेऽग्निदेवतायां प्रसिद्धोऽप्यतः पूर्वोक्तहेतुः तत्र वान न सा तत्राभिधीयते ॥ २७ ॥

नग्नादयः शब्दा अग्न्यादिवाचकाः । तथापि साक्षादेवानन्ययोगेन ब्रह्मवाचकैः शब्दैः व्यवहारार्थमनभिधानाच्चान्यत्र व्यवहरन्तीत्यभ्युपगमे विरोधं जैमिनिर्वक्ति । व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् । अन्ये व्यवहरन्त्येतानुरीकृत्य गृहादिवदिति स्कान्दवचनान्न मतानां परस्परविरोधः ॥ २८ ॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥ २९ ॥

तत्र तत्रोक्तस्य विष्णोरग्न्यादिषु अनुस्मर्यमाणत्वात् तन्नियम इति बादरिः ॥ ३० ॥

ओं । सम्पत्तेरिति जैमिनिस्तथाहि दर्श-
यति । ओं ॥ ३१ ॥

ओं । आमनन्ति चैन मस्मिन् । ओं ॥ ३२ ॥

इति वैयासिकब्रह्मसूत्रप्रथमाध्यायस्य
द्वितीयः पादः ।

---

ओं । द्युभ्वाद्यायतनं स्व-शब्दात् । ओं ॥१॥

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियम-मग्न्यादिसंप्राप्तया मन्यते । तद् यथा यथोपासते तदेव भवतीति दर्शयति । न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यते इति अत आह ॥ ३१ ॥

एनं विष्णुमस्मिन् अग्न्यादावामनन्ति योऽग्नौ तिष्ठन् य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष इत्यादिना ॥ ३२ ॥

इति श्रीमदानन्दतीर्थविरचिते ब्रह्मसूत्रभाष्ये
प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

ओं तत्र चान्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन् पादे दर्शयति । विष्णोः परविद्याविषय-

ओं । मुक्तोपसृप्यव्यपदेशात् । ओं ॥ २ ॥

ओं । नानुमानमतच्छब्दात् । ओं ॥ ३ ॥

प्रकृतिसुक्तं तच्च यस्मिन् द्यौः पृथिवी चान्तरीक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमित्यत्र प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः प्राणेश्वरः कृत्तिवासाः पिनाकीत्यादिना रुद्रस्य प्राणाद्याधारत्वप्रतीतेः । स एषोऽन्तश्चरते बहुधा जायमान इति जीवलिङ्गाच्च तयोः प्राप्तिरिति अत उच्यते । तमेवैकं जानथ आत्मानमित्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव आत्मब्रह्मादयः शब्दास्तस्मिन् विष्णुमव्ययं न सम्भवन्ति यस्मात्तैर्नैवात्मा गुणपूर्णेनेति ब्रह्मवैवर्त्ते ॥ १ ॥

अमृतस्यैष सेतुरिति ब्रह्मविदाप्नोति परम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् । मुक्तानां परमां गतिम् । एतमानन्दमयमात्मानमुपसंक्रामति इत्यादि तस्यैव मुक्तप्राप्यव्यपदेशात् । ‘बहुनात्र किमुक्तेन यावन्नैनं न गच्छति । योगी तावन्न मुक्तःस्यादेष शास्त्रविनिर्णयः ।’ इत्यादित्यपुराणे ॥ २ ॥

नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यो, भस्मधरोत्थादितच्छब्दाभावात् । सोऽन्तकः, स रुद्रः, स प्राणभृत्, स प्राणनायकः, स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परो वरीयानित्यादिना प्राणानां ग्रन्थित्वरुद्रत्वादे-

ओं। प्राणभृच्च। ओं॥ ४॥
ओं। भेदव्यपदेशात्॥ ओं॥ ५॥

विष्णोरेवोक्तत्वात् ब्रह्माण्डे च। रुजं द्रावयते यस्मात् तस्माद्रुद्रो जनार्दनः। ईशानादेव चेशानो महादेवो महत्त्वतः। पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात्। तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः। शिवः सुखात्मकत्वेन शर्वः संरोधनाद्धरिः। कृत्यात्मकमिदं देहं अतो वस्ते प्रवर्त्तयन्। कृत्तिवासास्ततो देवो विरिञ्चिश्च विरेचनात्। बृंहणाद् ब्रह्मनामासावैश्वर्य्यादिन्द्र उच्यते। एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः। वेदेषु स पुराणेषु गीयते पुरुषोत्तम इति वामने च। न तु नारायणादीनां नाम्नामन्यत्र सम्भवः। अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्त्तित इति। स्कान्दे च। ऋते नारायणादीनि नामानि पुरुषोत्तमः। प्रादादन्यत्र भगवान् राजवत्तैस्वकं पुर इति। चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति। उग्रो भस्मधरो लग्नः कपालीति शिवस्य च। विशेषनामानि ददौ स्वकीयान्यपि केशव इति ब्राह्मे॥ ३॥

एतैरेव हेतुभिर्नजीवो वायुश्च। अजायमानो बहुधा विजायत इति तस्यैव बहुधा जन्मोक्तेः॥ ४॥

नाटक्यं वाच्यं जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति भेदव्यपदेशात्॥ ५॥

ओं । प्रकरणात् । ओं ॥ ६ ॥

ओं । स्थित्यदनाभ्याञ्च । ओं ॥ ७ ॥

ओं । भूमा सम्प्रसादादध्युपदेशात् । ओं ॥ ८ ॥

ओं । धर्मोपपत्तेश्च ॥ ओं ॥ ६ ॥

ओं । अक्षरमम्बरान्तधृतेः । ओं ॥ १० ॥

द्वे विद्ये वेदितव्ये इति तस्य ह्येतत् प्रकरणम् ॥ ६ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्योऽभिचाकशीति इतीशजीवयोः स्थित्यदनोक्तेः ॥ ७ ॥

प्राणो वा आशाया भूयानित्युक्त्वा यो वै भूमा तत् सुखमित्युक्तेस्तस्यैव भूमत्वप्राप्तिः उत्क्रान्त प्राणानित्यादिलिङ्गात् प्राणशब्दो वायुवाची अतो वक्ति । संप्रसादात् पूर्णसुखरूपत्वात् अध्युपदेशात् सर्वेषाम् उपर्य्युपदेशाच्च विष्णुरेव भूमा सहस्रशीर्षं देवं विश्वाक्षं विश्वसम्भवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमं नित्यमिति श्रुतिः । तमुत्क्रामन्तं प्राणान्युत्क्रामतीत्यादिना उत्क्रमणादिलिङ्गविरोधोऽपि ॥ ८ ॥

सर्वगतत्वादिधर्मोपपत्तेश्च ॥ ९ ॥

अदृश्यत्वादिगुणाः अदृष्टं दृष्टः श्रुतं श्रोतेत्यादिना अहं

ओं । सा च प्रशासनात् । ओं ॥ ११ ॥

ओं । अन्यभावव्यावृत्तेश्च । ओं ॥ १२ ॥

सोममाह न संविभर्मीत्यादेस्तस्यापि सम्भवान्मध्यमाचर-स्योक्ता इति । अतो ब्रूते । एतस्मिन् खल्वक्षरे गार्ग्या-काश ओतश्च प्रोतश्चेत्यम्बरान्तस्य सर्वस्य धृतिर्ब्रह्मैवाक्षरं य उ त्रिधातुः पृथिवीमुत द्यामेको दधार भुवनानि विश्वा भर्त्ता स न भ्रियमाणो विभर्त्त्येको देवो बहुधा निविष्टः यदा भारं तन्द्रयते स भर्त्तुं निधाय भारं पुनरस्तमेति यस्मिन्निदं सञ्च विचैति सर्वं यस्मिन् देवा अधि विश्वे निषेदुरित्यादिश्रुतेः, पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् । विष्णुरेको विभर्त्तीदं नान्यस्तस्मात् क्षमो धृताविति च स्कान्दे ॥ १० ॥

सा च धृतिः प्रशासनादुच्यते । एतस्य वा अक्षरस्य वा प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादिना । तच्च प्रशासनं विष्णोरेव । सप्तार्द्धगर्भा भुवनस्य विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि चतुर्भिः साकं नवतिञ्च नामभिश्चक्रं न वृत्तं व्यतीरवीविपदित्यादि श्रुतेः । एकः शास्ता न द्वितीयोऽस्ति शास्ता यो हृच्छयस्तमहमिदं ब्रवीमि । न केवलं भवतश्च राजन् सर्वं बलं बलिनाञ्चापरेषामित्या-देश्च ॥ ११ ॥

अस्थूलमनण्वित्यादिना स्थूलत्वादीनामन्यवस्तुस्वभा-वानां व्यावृत्तेश्च अस्थूलोऽणुरमध्यमो मध्यमो व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण

ओं। ईक्षतिकर्म्मव्यपदेशात् सः। ओं ॥१३॥
ओं। दहर उत्तरेभ्यः। ओं ॥ १४ ॥

इत्यादेर्विष्णोरेव ते धर्माः अस्थूलोऽनणुरूपोऽसावविश्वो विश्व एव च। विरुद्धधर्म्मरूपोऽसावैश्वर्य्यात् पुरुषोत्तम इति ब्राह्मे ॥ १२ ॥

सदेव सौम्येदमग्र आसीदित्यादिना सतः स्रष्टृत्वमुच्यते तच्च सद्बहुस्यां प्रजायेयेति परिणाम-प्रतीतेर्न विष्णुः, स ह्यविकारः सदा शुद्धो नित्य आत्मा सदा हरिरित्यादिना अविकारः प्रसिद्ध इति अतो ब्रवीति। तदैक्षतेतीक्षति कर्म्मव्यपदेशात् स एव विष्णुरत्रोच्यते। नान्योऽतोऽस्ति द्रष्टा। नातोऽस्ति द्रष्टेत्यादिना तस्यैव हि तल्लक्षणं बहुत्वं चाविकारेणैवोक्तम्। अजायमानो बहुधा विजायत इति ॥ १३ ॥

चन्द्रादित्याधारत्वं विष्णोरुक्तम्। तच्चाथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किन्तदत्र विद्यते उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्य्याचन्द्रमसावुभौ विद्युन्नक्षत्राणीत्यादिना आकाशस्य प्रतीयते स चाकाशो न विष्णुः तस्यान्ते शुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमिति श्रुतेरिति। अत आह — य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजघत् सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिभ्य उत्तरेभ्यो गुणेभ्यो

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥ १५ ॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

दहरो विष्णुरेव। योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति। स एव सर्वेभ्यः पाप्मभ्य उदित इत्यादिना विष्णोरेव हि ते गुणाः नित्यतीर्णाशनायादिरेक एव हरिः स्वतः अशनयादिकानन्ये तत्प्रसादात्तरन्ति हीति पाद्मे। सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्त्तव्यम्। सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम्। सत्यकामत्वमन्येषां भवेच्च काम्यकामितेति च स्कान्दे ॥ १४ ॥

अहरहर्गच्छन्त एतं ब्रह्मलोकं न विन्दतीति सुप्तस्य त्वसद्गतिर्ब्रह्मशब्दश्चोच्यते। सता सोम्य तदासम्पन्नो भवतीति श्रुतेः तं हि सुप्तो गच्छति। अरश्च हरैन्यश्चार्णवो ब्रह्मलोके इति लिङ्गञ्च तथा दृष्टम्। अरश्चारण्यश्च सुधा-समुद्रौ तत्रैव सर्वाभिमतप्रदौ हावित्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते ॥ १५ ॥

एष सेतुर्विधृतिरिति धृतेः। एष भूताधिपतिरेष भूतपाल इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः। एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च एतस्य वा अक्षरस्य प्रशासने। स हि सर्वाधिपतिः सर्वपालः स ईशः स विष्णुः पतिः विश्वस्यात्मेश्वर इत्यादि श्रुतिभ्यस्तस्य ह्येव महिमा। सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पतिरिति स्कान्दे ॥ १६ ॥

प्रसिद्धेश्च ॥ १७ ॥

इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १८ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

अन्यार्थश्च परामर्शः ॥ २० ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

तत्रापि दहरं गगनं विशोकस्तस्मिन् तदन्तस्तदुपासितव्यमिति प्रसिद्धेश्च। तदन्तस्यापेक्षत्वात् तत् सुषिर इति श्रुतिविरोधः ॥ १७ ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचेति जीवपरामर्शात् स इति चेत्–न, तस्य स्वतोपहतपाप्मत्वाद्यसम्भवात् ॥ १८ ॥

स तत्र पर्य्येति जक्षत्क्रीडन्नममान इत्याद्युत्तरवचनाद् जीवेति चेत्–न, तत्र हि परमेश्वरप्रसादाविर्भूतस्वरूपोऽयमुच्यते। यत्प्रसादात् स मुक्तो भवति स भगवान् पूर्वोक्तः ॥ १९ ॥

यं प्राप्य स्वेन रूपेण जीवो निष्पद्य स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ २० ॥

दहर इत्यल्पश्रुतेर्नेति चेत्–न, निचाय्यत्वादेवं व्योमवद्व्युक्तत्वात्। एष स आत्मान्तर्हृदये ज्यायानिति श्रुत्युक्तत्वाच्च ॥ २१ ॥

अनुकृतेस्तस्य च॥ २२॥

अपि च स्मर्य्यते॥ २३॥

शब्दादेव प्रमितः॥ २४॥

अदृश्यत्वादयः परमेश्वरे गुणा उक्ताः। तेषां सुखं शाश्वतं नेतरेषां तदेतदिति मन्यन्ते। निर्देश्यं परमं सुखमित्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमंङ्गे यत्वञ्चोच्यते। अतो वक्ति।

तमेव भान्तमनुभाति सर्वमित्यनुकृतेस्तस्य भासा सर्वमिदं विभातीति वचनाच्च। परमात्मैवानिर्देश्य-सुखरूपः। स हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा अहं तत्तेजो राशील् नारायणभासा हि सर्वं भाति॥ २२॥

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्र-मसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति। न तद्भास-यते सूर्य्यो न शशाङ्को न पावकः। यद् गत्वा न निव-र्त्तन्ते तद्धाम परमं ममेति च॥ २३॥

विष्णुरेव जिज्ञास्य इत्युक्तम्। ऊर्द्ध्वं प्राणमुन्नयत्य-पानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासत इति सर्वदेवोपास्यः कश्चित् प्रतीयते। स च एवमेवैष प्राण इतरान् प्राणान् पृथगेव सन्निधत्ते। योऽयं मध्यमः प्राणः कुविदङ्गेत्यादिना प्राणव्यवस्थापकत्वान्मध्य-मत्वात् सर्वदेवोपास्यत्वाच्च वायुरेवेति प्रतीयते। अतो-

**हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥**
**तदुपर्य्यपि वादरायणः सम्भवात् ॥ २६ ॥**
**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् २७**

ऽब्रवीत् वामनशब्दादेव विष्णुरिति प्रमितः। न हि श्रुतेर्लिङ्गं बलवत्। श्रुतिलिङ्गं समाख्या च वाक्यं प्रकरणं तथा। पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णय इति स्कान्दे ॥ २४ ॥

तच्च लिङ्गं विष्णोरेव। तस्यैव प्राणत्वोक्तेस्तद्देवत्व- प्राणोऽभव इति। सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृदया- काशापेक्षया युज्यते। इतरप्राणिनामङ्गुष्ठाभावेऽपि मनु- ष्याधिकारत्वान्न विरोधः ॥ २५ ॥

मनुष्याणामेव वेदविद्यायामधिकार इत्युक्तम्। तिर्य्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं न तु देवाद्यपेक्ष- येत्याह। तदुपरि मनुष्यणां सतां देवावित्यप्युपरि सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावा तिर्य्यगादीनां तदभावादभावः तेषामपि यत्र विशिष्टबुद्ध्यादिभाव- स्तत्राविरोधः निषेधाभावात् दृश्यन्ते हि तरितर्य्या- दयः ॥ २६ ॥

मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम्। तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति तत् पूर्वं देवता- भावाद्देवतोद्दिष्टकर्म्मणि विरोध इति चेत् न अनेकेषां

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमाना-
भ्याम् ॥ २८ ॥**

**अत एव च नित्यत्वम् ॥ २९ ॥**

**समान-नाम-रूपत्वाच्चावृत्तावप्यविरोधो दर्श-
नात् स्मृतेश्च ॥ ३० ॥**

देवतापदप्राप्तेर्दर्शनात्। तेन नाकं महिमानः स चान्तः यत्र पूर्वे साध्याः सन्ति देवा इति ॥ २७ ॥

वाचा विरूपाणाल्तायत्वाद् विश्रुतेरात्मनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतःप्रामाण्यसिद्धेश्च नित्यत्वाद्वेदस्य। तदुदितानां देवानामनित्यत्वात् पुनरन्यभावनियमाभावाच्च शब्दे विरोध इति चेत् – न, सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। यथैव नियमः काले सुरादिनियमस्तथा। तस्मान्नानीदृशं क्वापि विश्वमेतद्भविष्यतीत्यादेः। अत एव शब्दात् तेषां प्रभवनियमात्। महतां प्रत्यक्षाद् यथेदानीं तथोपर्य्यपि देवादयो भविष्यन्तीतीतरेषामनुमानाच्च ॥ २८ ॥

अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ॥ २९ ॥

अतीतानागतानां देवानां समाननामरूपत्वात् प्राप्तपदानां सुतपदप्रवृत्तावप्यविरोधः। यथापूर्वमिति दर्शनात्। अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा।

मध्वादिष्वसम्भवादनधिकारः जैमिनिः ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥

भावात्तु वादरायणोऽस्ति हि ॥३३॥

ऋचीणां नामधेयानि याश्च वेदेषु दृष्टयः। वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति स्मृतेश्च ॥ ३० ॥

वसूनामेवैको भूत्वेत्यादिना प्राप्यफलत्वात् प्राप्यपदानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते ॥ ३१ ॥

ज्योतिषि सर्वज्ञत्वेऽभावाच्च। आदित्यप्रकाशेऽन्तर्भाववत् तज्ज्ञाने सर्ववसूनाम् अन्तर्भावात्। नित्यसिद्धत्वाद् विद्यानाम् ॥ ३२ ॥

फले विशेषाभावात् प्राप्तपदानामपि देवानां मध्वादिष्वधिकारं वादरायणो मन्यते, अस्ति हि प्रकाशविशेषः। यावत् सेवापरे तत्त्वे तावत् सुखविशेषता। सम्भवाच्च प्रकाशस्य परमैकमतौ हरिम्। तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्। सर्वं विधीयते नित्यं सर्वयज्ञादि कर्म चेति स्कान्दे। उक्तफलानधिकारमात्रं जैमिनिमतम् अतो न मतविरोधः। सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम्। स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत इति च ब्राह्मे। मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्याप्यह हारेवो शूद्रेति पौत्रायणौक्तेरधिकार इति। अत आह ॥ ३२ ॥

शुगस्य तदनादर-श्रवणात् तदाद्रवणात्
सूच्यते हि ॥ ३४ ॥
क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५
संस्कार-परामर्शात् तदभावाभिलापाच्च ॥३६॥
तदभावनिर्द्धारणे च प्रवृत्तेः ॥३७॥

नासौ पौत्रायणः शूद्रः शूचाद्रवणमेव शूद्रत्वं कमूचरएनमेत मन्त्रमित्यनादरश्रवणात्। सह संजिहान एव क्षत्तारमुवाचेति सूच्यते हि ॥ ३४ ॥

अयमश्वतरीरथ इति चित्ररथसम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च। रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते इति ब्राह्मे। यत्र त्वदीस्तत्र न वेदी यत्र नो रथ इति च ब्रह्मवैवर्त्ते ॥ ३५ ॥

अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यध्ययनार्थं संस्कारपरामर्शात्। नाग्निर्न यज्ञो न क्रियासंस्कारो न व्रतानि शूद्रस्येति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च। उत्तमस्त्रीणान्तु न शूद्रवत्। सपत्नीं सेऽपराधमपतिं स इत्यादिष्वधिकारदर्शनात्। संस्काराभावेनाभावस्तु सामान्येन। अस्ति च तासां संस्कारः, स्त्रीणां प्रदानकर्म्मैव यथोपनयनं तथैव स्मृतिः ॥ ३६ ॥

नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीति सत्यवचनेन सत्य-

**श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ३८ ॥**

**कम्पनात् ॥ ३९ ॥**

**ज्योतिर्दर्शनात् ॥ ४० ॥**

कामस्य शूद्रत्वाभावनिर्धारणे हारिद्रुयतस्य नैतद्ब्राह्मणो विवक्तुमर्हतीति तत्संस्कारे प्रवृत्तेश्च ॥ ३७ ॥

श्रवणे त्रपुजतुभ्यां श्रोत्रपरिपूरणम्। अध्ययने जिह्वाच्छेदः। अर्थावधारणे हृदयविदारणमिति प्रतिषेधात्। नाग्निर्न यज्ञं शूद्रस्य तथैवाध्ययनं कुतः। केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते इति स्मृतेश्च। विदुरादीनां तूत्पन्नज्ञानत्वात् कश्चिद्विशेषः ॥ ३८ ॥

यदिदं किञ्च जगत् सर्वं प्राणये जातिनिःसृतम्। महद्भयं वज्रमुद्यतं यत्र तद्विदुरमृतास्ते भवन्तीत्युद्यतवज्रज्ञानात्मोक्षः प्रतीयत इति अतोऽब्रवीत्। एजतीति कम्पनवचनादुद्यतवज्रो भगवान्। को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादिति हि श्रुतिः। प्राणस्य प्राणमुत चक्षुषश्चक्षुरिति च। नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः। किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत इति स्कान्दे। चक्रचङ्क्रमणादेष वज्रनाद्वज्र उच्यते। खण्डनात् खड्ग एवैष हेति नामा हरिः स्वयमिति ब्रह्मवैवर्त्ते ॥ ३९ ॥

हृदय आहितं ज्योतिः परमात्मेत्युक्तं तत्र योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिःपुरुष इत्यत्रोभौ लोकावनु-

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥
सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

सञ्चरतीति वचनाद् जीव इति प्रतीयत इति। अत उच्यते। विष्णुरेव ज्योतिर्विष्णुरेवात्मा विष्णुरेव ब्रह्म विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्द इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव प्राज्ञेनात्मा अन्वारूढ उत्सर्ज्जनाद् यातीति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ॥ ४० ॥

सर्वाधारत्वं विष्णोरुक्तं तच्चाकाशो वै नाम नामरूपयोर्निर्वहितेत्याकाशस्य प्रतीयते। वै नामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशस्याङ्गीकर्त्तव्य इति। अत उच्यते। ते यदन्तरा तद्ब्रह्मेत्यर्थान्तरत्वादिव्यपदेशादाकाशो हरिरेव। अवर्णम्। ततो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादि श्रुतेः तस्य हि तल्लक्षणम्। अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्ज्जनादिति च ब्राह्मे ॥ ४१ ॥

असङ्गत्वं परमात्मन उक्तं, तच्च स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति स्वप्नादि द्रष्टुः प्रतीयते। स च जीवः प्रसिद्धेरिति अतो वक्ति। प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरम्। प्राज्ञेनात्मनान्वारूढ उत्सर्ज्जनाद् यातीति भेदव्यपदेशान्न जीवः परत्र वा सङ्गः स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते ॥ ४२ ॥

एष नित्यो महिमा ब्राह्मणस्येति ब्राह्मणस्यापि नित्य-

पत्यादिशब्देभ्यः ॥ ४३ ॥

इति वैयासिक-ब्रह्मसूत्रे प्रथमाध्यायस्य
तृतीयः पादः।

---

आनुमानिकमप्येकेषामिति चेन्न शरीररूपक-
विन्यस्त-गृहीतेर्दर्शयति च ॥ १ ॥

महिमा प्रतीयते स च ब्राह्मणः स वा एष महाजन आत्मेत्यजशब्दादिभिरिभिरिति प्राप्तं देवानाञ्च विद्याकर्म्मणोः पदप्राप्तिः सूचिता तदुपर्य्यपीति श्रुती ब्रवीति। सर्वस्याधिपतिः सर्वस्येशानः स वा एष नेति नेतीत्यादि शब्देभ्यो नित्यमहिमो विष्णुरेव उतामृतत्वस्येशानो यदन्नेनातिरोहति। सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशाविधर्म्मणि स यो तो स्रुत इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः ॥ ४३ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमत्ब्रह्मसूत्रभाष्ये प्रथमाध्यायस्य तृतीयः पादः समाप्तः।

---

ओँ। श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन् पादे। तत्तु समन्वयादिति सर्वशब्दानां परमे समन्वय

सूक्ष्मन्तु तदर्हत्वात् ॥ २ ॥

तदधीनत्वादर्थवत् ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ ४ ॥

उक्तः तन्न युज्यते । अव्यक्तात् पुरुषः पर इति सांख्यानुमानकल्पितं प्रधानमप्येकेषां शाखिनामुच्यते इति चेत् न, तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतिः । कप्रत्ययः कुत्सने । परमात्मन एवाव्यक्तशब्दस्तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याव्यक्तः शब्दः तुच्छेनाभ्वपिहितं तदासीदिति दर्शयति च । अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम् । यो वेद हरिमात्मानं स भयादनुमुच्यत इति पिप्पलादिशाखायाम् । अक्षरं ब्रह्म परमम् इत्युक्वा अव्यक्तोऽक्षर इत्युक्त इति वचनाच्च ॥१॥

सूक्ष्ममेवाव्यक्तशब्देनोच्यते यदव्यक्ततामर्हति । यत्तत् सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति । यत् तल्लोकान् विदुर्लोकं सारं विदन्त्येतत् कवयो योगनिष्ठा इति पिप्पलादशाखायाम् । मुख्ये च विद्यमानेनामुख्यं युक्तम् ॥ २ ॥

तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् । यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते । यथा जीवः पराप्नोति यथा राजा जयीत्यपि इति स्कान्दे ॥ ३ ॥

अन्यस्य न वाच्यत्वं युज्यते ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि ॥ ५ ॥

प्रकरणात् ॥ ६ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ७ ॥

महद्वच्च ॥ ८ ॥

चमसवदविशेषात् ॥ ९ ॥

महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते इति ज्ञेयत्वं वदतीति चेत् न, प्राज्ञः परमात्मा हि तत्रोच्यते। अणोरणीयान्महतो महीयानिति तस्यैव महतो महत्त्वम्। सर्वस्मात् परस्य महतोऽपि परत्वं युज्यते ॥ ५ ॥

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदं इति तस्य ह्येतत् प्रकरणम् ॥ ६ ॥

त्रयाणामेव पितृसौम्यत्नस्य स्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च। अविज्ञान प्रार्थनञ्च प्रश्न इत्यभिधीयते इति वचनान्न विरोधः ॥ ७ ॥

यथा हिमवच्छब्दो महत्त्वे प्रसिद्धोऽपि परमात्मन एव मुख्यः, एव मितरेऽपि ॥ ८ ॥

यथा चमस शब्दोऽन्यत्र प्रसिद्धोऽपीदं तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्द्ध बुध्न इति श्रुतेः शिरोवाचकः। एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि नामानि सर्वाणि यमाविशन्ति। तं वै विष्णुं परममुदाहरन्तीत्यादि श्रुतेः। परमात्माभिधायका एव अविशेषात् श्रुतेः ॥ ९ ॥

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १० ॥

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥

न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥१२

प्राणादयो वाक्यशेषात् ॥ १३ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥

वसन्ते वसन्ते ज्योतिषा यजेतेत्यादि कर्म्माभिधायकस्य कर्म्मक्रमादिविरोधान्न युज्यत इति अत आह ज्योतिरित्यादि। कर्म्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव। एष इमं लोकमभ्यार्च्चदित्युपक्रम्य ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे एकैव व्यवहृतिः प्राण एव प्राण ऋच इत्येव विद्यादिति ह्यधीयत एके ॥ १० ॥

मधुविद्यादिवत् सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्म्मक्रमादिविरोधः ॥ ११ ॥

यस्मिन् पञ्च पञ्च जना आकाशस्य प्रतिष्ठित इत्यादिषु बहुसंख्योपसंग्रहेऽपि न विरोधः। तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपवत्त्वाच्च ॥ १२ ॥

पञ्च पञ्चजनानाह प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन इति वाक्यशेषात् ॥ १३ ॥

तद्देवा ज्योतिषां ज्योतिरित्यनेन कारणानां पञ्चकम् ॥१४

कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः ॥१५॥

समाकर्षात् ॥ १६ ॥

जगद्वाचित्वात् ॥ १७ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥१८॥

अवान्तरकारणत्वेनापि स एवोच्यते इति वक्ति आकाशादिष्ववान्तरकारणत्वेन स एव स्थितः यथा व्यपदिष्टस्यैव परस्य य आकाशे तिष्ठन्नित्यादिना आकाशादिषूक्तेः ॥ १५ ॥

सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इति अतोऽब्रवीत्। परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियते। परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि। व्यवह्रियन्ते सततं लोकवेदानुसारत इति माद्मे ॥ १६ ॥

तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः। जगति व्यवहारो लोकस्य न तु परमात्मनि तथा। अतो जगति प्रसिद्धिः शब्दानाम् ॥ १७ ॥

तदधीनत्वात्तच्छब्दवाच्यमित्युक्तम्। तज्जीवमुख्यप्राणयोर्लिङ्गम्। अस्य शरीरस्य प्रदेशाभ्याम् जीवो जहात्यथ सा शुष्यति वायुना हि सर्वे लोका नेनीयन्ते इत्यादिश्रुतिभ्य इति चेत् न, उपासनात्रैविध्यादिति व्याख्यातत्वात्॥ १८ ॥

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥

वाक्यान्वयात् ॥ २० ॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २१ ॥

उत्क्रमिष्यत एवं भावादित्यौडुलोमिः ॥ २२ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २३ ॥

परमात्मज्ञानार्थं कर्म्मादिकमपि वदतीति जैमिनिः । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तस्मै होवाच द्वे विद्ये वेदितव्ये कथन्नु भगवः स आदेशो भवतीति यथा सौम्यैकेन मृत्पिण्डेनेत्यादिना प्रश्नव्याख्यानाभ्याम् । एवमपि चैके पठन्ति । यस्तं न वेद किमृचा करिष्यतीति ॥ १९ ॥

वाक्यस्याप्येवमन्वयो युज्यते पृथक् स्थितस्यापि परमात्मनः ॥ २० ॥

नान्यः पन्था विद्यते अयनायेति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्म्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति ॥ २१ ॥

उत्क्रमिष्यतो मुमुक्षोः कर्म्मादिना भाव्यं साधनसाधनत्वेन अतस्तद्वक्तीत्यौडुलोमिः मन्यते ॥ २२ ॥

सर्वं परमात्मन्यवस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः । कृष्णद्वैपायनमतादेकदेशविदः परे । वदन्ति यथा प्राज्ञं न विरोधः कथञ्चनेति पाद्मे ॥ २३ ॥

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २४ ॥

अभिध्योपदेशाच्च ॥ २५ ॥

साक्षाच्चोभयाम्नानात् ॥ २६ ॥

आत्मकृतेः परिणामात् ॥ २७ ॥

स्त्रीशब्दा अपि तस्मिन्नेवेत्याह हन्तैतमेव पुरुषं सर्वाणि नामान्यभिवदन्ति। यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिविशन्त्येवमेवैतानि नामानि सर्वाणि पुरुषमभिसंविशन्तीति प्रतिज्ञादृष्टान्तानुपरोधात् प्रकृतिशब्दवाच्योऽपि स एव ॥ २४ ॥

मायान्तु प्रकृतिं विद्यान्मायिनं च महेश्वरम्। महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येव तवेच्छानन्त! कथ्यत इति वचनादभिध्यैव च प्रकृतिशब्देनोच्यते। सोऽभिध्यासप्रकृतिः स प्रज्ञा स आनन्द इति श्रुतेरभिध्या च स्वरूपमेव। ध्यायति ध्यानरूपासौ सुखी सुखमतीव च। परमैश्वर्ययोगेन विकार्यतयेष्यत इति ब्रह्माण्डे एवस्त्रेष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽतः परमः पराद्विश्वरूप इति पैङ्गिश्रुतौ साक्षादेव प्रकृतिपुरुषत्वाम्नानात् ॥ २५ ॥ २६ ॥

प्रकर्षेण करोतीति प्रकृतिरिति योगाच्च प्रकृतावनुप्रविश्य तां परिणाम्येतत् परिणामनियामकत्वेन तत्र स्थितात्मनो बहुधाकरणात् अथ ह्येष आत्मा प्रकृतिमकु

योनिश्च हि गीयते ॥ २८ ॥

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २९ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पूज्यपादविरचिते प्रथमाध्यायस्य चतुर्थपादः समाप्तः ।

---

प्रविश्यात्मानं बहुधा चकार तस्मात् प्रकृतिरित्याचक्षत इति भाल्लवेयश्रुतिः । अविकारोऽपि परमः प्रकृतिस्तु विकारिणी । अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयत इति नारदीये । न चान्यत् कल्प्यम् अप्रमाणकत्वात् ॥ २७ ॥

अव्यवधानेनोत्पत्तिद्वारत्वञ्च प्रकृतित्वं तच्चास्यैव हि गीयते । यद्भूतयोनिं परिपश्यन्ति धीरा इति व्यवधाने प्रसूतिस्तु पुंस्त्वं विद्वद्भिरिष्यते । सूतिरव्यवधानेन प्रकृतित्वमिति स्थितिः । उभयात्मकसूतित्वाद्वासुदेवः परः पुमान् । प्रकृतिः पुरुषश्चेति शब्दैरेकोऽभिधीयत इति ब्रह्माण्डे ॥ २८ ॥

एतेन सर्वे शून्यादि शब्दा अपि व्याख्याताः । एष ह्येव शून्य एष ह्येव तुच्छ एष ह्येवाभाव एष ह्येवाव्यक्तोऽदृश्योऽचिन्त्यो निर्गुणश्चेति महोपनिषदि । शबले कुर्वते

# अथ द्वितीयोऽध्यायः।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

विष्णुरदृश्यः सन् परः स्वयम्। तस्माच्छून्यमिति प्रोक्तस्तोदनात्तुच्छ उच्यते। नैष भावयितुं योग्यः केनचित् पुरुषोत्तमः। अतो भावं वदन्त्येनं नाशत्वान्नाश इत्यपि। सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता। अन्येषां व्यवहारार्थमिष्यते व्यवहर्तृभिरिति महाकौर्म्मे एतेन तदधीनत्वादयुक्तयुक्तिसमुदायेन। अवधारणार्थं सर्वस्याप्युक्तस्याध्यायमूलतः। द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये इति वराहसंहितायाम् ॥ २९ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थ भगवत् पूज्यपाद विरचिते प्रथमाध्यायस्य चतुर्थपादः समाप्तः।

---

उक्तोऽर्थे विरोधं दर्शयत्यनेनाध्यायेन। प्रथमपादे युक्तविरोधं प्रथमतः स्मृत्यविरोधं दर्शयति सर्वज्ञा रुद्रादयः अतस्तेषां वचनविरोधेऽप्रामाण्यमेव स्यादिति चेत् न अन्यस्मृतीनां विष्णादिभिर्नितरां सर्वज्ञैरेव कृतत्वाच्छ्रुतिवाक्यं सिध्यति ॥ १ ॥

इतरेषाञ्चानुपलब्धेः ॥ २ ॥

एतेन योगः प्रत्युक्तः ॥ ३ ॥

न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥ ४॥

इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तं च शब्दैर्न भागोपलब्धिरङ्गीकृता ॥ २ ॥

योगफलं प्रत्यक्षोपलब्धिरिति न मन्तव्यम्। उक्ताभ्यासे तत्तत्काल एव फलादृष्टेः।

नैव श्रुतिस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यं विलक्षणत्वान्नित्यत्वात्तदनुसारित्वाच्च। न हि नित्यदोषाः कल्प्याः स्वतश्च प्रामाण्यं अन्यथानवस्थितेः। न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयतीति भाल्लवेयश्रुतेश्च। नित्यत्वञ्च शब्दादेव प्रतीयते। वाचाविरूपनित्ययेत्यादौ। अनादिनिधना नित्येति च स्मृतिः ॥ ३ ॥

अधिकारिणां फलं भविष्यत् पुराणे च। ऋग्यजुःसामाथर्वाख्या मूलरामायणं तथा। भारतं पञ्चरात्रञ्च वेदा इत्येव शब्दिताः। पुराणानि च यानीह वैष्णवानि विदो विदुः। स्वतःप्रामाण्यमेतेषां नात्र किञ्चिद्विचार्य्यते। यद्यप्युक्तं न दृश्येत पूर्वकर्म्मात्र कारणम्। ना प्रामाण्यं भवेदेषां दृश्यते ह्यधिकारतः। इतः प्रामाण्यमन्येषां न

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥
दृश्यते तु ॥ ६ ॥
असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

सतस्तु कथञ्चन। अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशय इति ॥ ४ ॥

मृदब्रवीदापोऽब्रुवन्नित्यादि वचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्। मृदाद्यभिमानिदेवतैव तत्र व्यपदिश्यते। तेषाञ्चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र। अतस्तासां सर्वमुक्तं युज्यते ॥ ५ ॥

तासां सामर्थ्यं महद्भिः भविष्यत् पुराणे। पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः। अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः। ताश्च सर्वा गता नित्यं वासुदेवैकसंश्रया। इति ॥ ६ ॥

असदेवेदमग्र आसीत्। असतः सदजायतेत्यादिना असतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति। प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम्। असतः कारणत्वाद्युक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते। सर्वशब्दानां ब्रह्मणि समन्वयेऽपि तदधीनत्वादर्थवदित्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वाङ्गीकारादुभयतः प्राप्तिः। तथाच श्रुतिप्राप्तमेवासत्त्वमत्र निषिध्यते समस्योपरि निषेधात् अर्थाद्युक्तिविरोधोऽत्र निराक्रियते ॥ ७ ॥

अपीतौ तद्वत् प्रसङ्गादसमञ्जसम् ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

स अत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ॥ ८ ॥

प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते। सत उत्पत्तिः सविशेषनाशश्च लोके दृष्टः दृष्टान्ताभावादेव ॥९॥१०॥

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथानुमेयमिति चेन्न। एवमपि प्रमाणसिद्धेऽपि मोक्षेऽन्यथानुमेयत्वादनिर्मोक्षप्रसङ्गः। अतो यावत् प्रमाणसिद्धं तावदेवाङ्गीकर्त्तव्यं नातोऽन्यच्छक्यम्। यावदेव प्रमाणेन सिद्धं तावदग्राहयन्। स्वीकुर्य्यान्नैव चान्यत्र शक्यं मानमृते क्वचिदिति वामने ॥ ११ ॥

एतेन दृष्टान्तभावेनाभावेन विशिष्टा अपरिग्रहा अपि विरुद्धसिद्धान्ताः। अकर्त्तृकत्वात् चेतनकर्त्तृत्वजीवकर्त्तृत्वादयोऽपि। अकस्माद्वीदमाविरासीदकस्मात्तिष्ठत्यकस्मात्लयमभ्युपैति। प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति प्रधाने लयमभ्येति न ह्यन्यत् कारणं मतम्। जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः। जीवे तु लयमृच्छन्ति न जीवात्

भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ १३ ॥

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

कारणं परमित्यादि श्रुतिप्राप्ता निराकृताः यथा दुःखादिषु जीवस्याभ्यतन्त्रमेवमन्येष्वपीति दृष्टान्तः । श्रुतिगतिस्तु ब्रह्मवाचकत्वेन दर्शिता । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ॥ १२ ॥

कर्म्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वं एकीभवन्तीति मुक्तजीवस्य परप्राप्तिरुच्यते । अतस्तयोरविभागः । अतः पूर्वमपि स एव । न ह्यन्यस्यान्यत्वं युज्यत इति चेन्न स्याल्लोकवत् । यथा लोके उदक उदकान्तरस्यैकीभावव्यवहारेऽप्यन्तर्भेदोऽस्त्येव एवं स्यादन्यत्रापि । तथाच श्रुतिः । यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवतीति स्कान्दे च । उदकं तूदके सिक्तं मिश्रमेव यथा भवेत् । न चैतदेव भवति यतो वृद्धिः प्रदृश्यते । एवमेव हि जीवोऽपि तादात्म्यं परमात्मनः । प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणात् इति । ब्रह्मेशानादिभिर्देवैर्यत् प्राप्तुं नैव शक्यते । तद्यत् स्वभावकैवल्यं स भवान् केवलो हरिरिति च । न ते महित्वमन्वश्नुवन्ति । न ते विष्णोर्जायमानो न जायत इत्यादि च फलत्वेऽपि युक्तिविरोधेऽन्तर्भावाद्युक्तम् ॥ १३ ॥

स्वतन्त्रबहुसाधनदृष्टिर्लोकदृष्टान्तेनैवं ब्रह्मणः स्वरूप-

भावे चोपलब्धेः ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्म्मान्तरेण वाक्य-
शेषात् ॥ १७ ॥

सामर्थ्यादेव तस्य सृष्टिः किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् कथमासीदिति ह्याक्षेपः। अधिष्ठानाद्यनुक्तेः। आदिशब्दात् युक्तिभिश्च। परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते। साधनानां साधनत्वं यतः किं तस्य साधनैरित्यादिभिः ॥ १४ ॥

स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत। अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन। अतो वेदत्वमेतेषां यतस्ते सर्ववेदका इति स्कान्दे ॥ १५ ॥

अद्भ्यः संभृतः पृथिव्यै रसाच्चेत्यादि साधनान्तरप्रतीतिः कथमनुपलब्धिरित्यत आह। अवरस्य तदधीनस्य साधनस्य सत्त्वात्। काल आसीत् पुरुष आसीत् परम आसीत् तद्यदासीत्तदा हतम् आसीदथ ह्येक एव परम आसीद्य-स्यैतदासीत् न ह्येतदासीदिति काषायणश्रुतिः ॥ १६ ॥

नासदासीन्नो सदासीत्तदानीमिति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न अव्यक्तत्वपारतन्त्र्यादिधर्म्मान्तरेण हि तदुच्यते तम आसीदित्यादि वाक्यशेषात् न चान्यत्र प्रमाणमस्ति। अजा ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः। अनाद्यनन्तं जगदेतदीदृक् प्रवर्त्तते नात्र

युक्तेः शब्दान्तराच्च ॥ १८ ॥

विचार्य्यमस्ति । न चान्यथा क्वापि च कस्य वेदश्भूत् पुरा नापि तथा भविष्यत् । असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् । असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्येन विदुः परां हि । यः सत्यरूपं जगदेतदीदृक् सृष्ट्वा भूत्वत् सत्यकर्मा महात्माहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजति । अथैनमाहुर्नित्यकर्मेति । नित्यं ह्येवासौ कुरुते । यच्चकेत सत्यमित्येतमोघमित्यादि स्मृतिश्रुतिभ्यश्च । परस्परविरोधे तु वाक्यानां यत्र युक्तता तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यत इति वृहत्संहितायां विरुद्धवत् प्रतीयते न आगमाय एवं मिथः । तत्र दृष्टानुसारेण तेषामर्थोऽन्वविष्यत इति च । ईशानोशी जगन्मिथ्या न पूज्यो गुरुरित्यपि । इत्यादि बुद्धिरुद्धानि प्रमाणान्यथ युक्तयः । प्रमाणैर्बहुभिर्न्न या भासा इति वैदिकैः । वेदवेदानुसारिषु विरोधेऽन्यार्थकल्पना । अन्येषान्तु विरुद्धानां विप्रलम्भोऽथ विभ्रम इति भागवततन्त्रे । शास्त्रार्थयुक्तोऽनुभवः प्रमाणन्तूत्तमं मतम् । मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् । प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु । अनुमयो न स्वतन्त्राः प्रमाणपदवीं ययुरिति पुरुषोत्तमतन्त्रे ॥ १७ ॥

साधनानां साधनत्वं यदात्माधीनमिष्यते । तदा साधनसम्पत्तिरैश्वर्य्यद्योतिका भवेदित्यादेः साधनान्तरेण सृष्टिर्युक्ता । अज्ञः सम्भूतो हिरण्यगर्भ इत्यष्टावित्यादिशब्दान्तराच्च ॥ १८ ॥

पटवच्च ॥ १९ ॥

यथा च प्राणादि ॥ २० ॥

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१॥

अधिकन्तु भेदनिर्द्देशात् ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

साधनान्तरेण हि पटादिसृष्टिर्द्दृष्टा ॥ १९ ॥

तच्च साधन जातं तेनानुप्रविष्टमेव। यथा शरीरेन्द्रियादि। प्रकृतिं पुरुषञ्चैव प्रविश्य पुरुषोत्तमः। क्षोभयामास भगवान् सृष्ट्यर्थं जगतो गुरुः इति कौर्म्मे ॥ २० ॥

जीवकर्त्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते। जीवकर्त्तृत्वपक्षे हितकरणमहितकरणञ्च न स्यात् ॥ २१ ॥

न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः अधिकशक्तिमत्त्वात् श्रोता मन्ता द्रष्टा देष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः एष त आत्मा सर्वान्तरीयो अशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति निर्द्देशात् ॥ २२ ॥

दृष्टवन्मा स्वतन्त्रत्वात् स्वतः कर्तृत्वानुपपत्तिर्जीवस्य। यथा दारुमयीं योषां नरः स्थिरसमाहितः। सङ्गल्य अङ्गमङ्गानि तथा राजन्निमाः प्रजाः इति महाभारते ॥ २३ ॥

जीवेनैव कार्य्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न

देवादिवदपि लोके ॥ २५ ॥

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते । अन्न रसादिरूपेण प्राणः परिणयत्यसाविति वचनात् एवं जीवे दृश्यमानोऽपि कार्य्योपसंहारोऽस्वातन्त्र्यात् परकृत एव । य आत्मानमन्तरोपगमयति । नाहं कर्त्ता न कर्त्ता त्वं कर्त्ता यस्तु सदा प्रभुरित्यादिः ॥ २४ ॥

न च कर्त्तुरीश्वरस्यादृष्टिविरोधः । देवादिवददृश्यत्व-शक्तियोगात् लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा किमीश्वरस्य । न युक्तियोगाद्वाक्यानि निराकार्य्याण्यपि क्वचित् । विरोध एव वाक्यानां युक्तयो न तु युक्तय इति वृहत्संहितायाम् ॥ २५ ॥

अयञ्च दोषो जीवकर्तृत्वपक्षे एकेनाङ्गुलिमात्रेण प्रव-र्त्तमानोऽपि पूर्णप्रवृत्तिः स्यान्न च तद्युज्यते । सामर्थ्यैक-देशदर्शनात् । नाटकदेशेन निरवयवत्वात् । अथ यः स जीवः स नित्योनिरवयवोऽज्ञाता ज्ञाता सुखी दुःखी शरीरे-न्द्रियस्थ इति भाल्लवेयश्रुतिः । न चोपाधिकृतोंऽशः स एव । अंश उपहित इति द्वित्वापेक्षत्वात् । न चान्यत् कल्प्यं यदि युक्त्या विरुद्धे तत्तदीशकृतमेवहीति शल्यन्तरीतिं ॥ २६ ॥

न चेश्वर पक्षेऽयं विरोधः । योऽसौ विरुद्धोऽविरुद्धोऽ-नुरागवाननुरागवान् इन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः

आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

स्वपक्ष दोषाच्च ॥ २९ ॥

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

परमात्मेति पैङ्ग्यादि श्रुतेरिव शब्दमूलत्वाच्च न युक्ति-विरोधः। यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात् क्वचित्। विरोधे वाक्ययोः क्वापि किञ्चित् साहाय्यकारणमिति पुरुषोत्तमतन्त्रे ॥ २७ ॥

परमात्मनो विचित्राः शक्तयः सन्ति न चान्येषाम्। विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाःस्युः। एको वशी सर्वभूतान्तरात्मा सर्वान् देवानेक एवानुविष्ट इति श्वेताश्वतरश्रुतिः ॥ २८ ॥

ये दोषा इतरत्रापि ते गुणाः परमे मताः न दोषः परमे कश्चिद् गुणा एव निरन्तरा इति वचनात् जीवपक्ष एव दोषः न परमात्मपक्षे। अथ यः स दोषः साञ्जनः स अनः स जनिः सजीवो ,यः सनिर्दोषो निष्कलः सगुणः परमात्मेति कात्यायन श्रुतिः ॥ २९ ॥

सर्वे युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्त्र-शक्तिम्। नित्यानन्दा नित्यरूपा च मुक्ता जरा च या शाश्व-तात्मेतिच यां वदन्तीति चतुर्वेदशिखायाम्। अतो न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेव ॥ ३० ॥

न च करणाभावादनुपपत्तिरिति युक्तम्। अपाणि-

**न प्रयोजनवत्त्वात् ॥ ३२ ॥**

**लोकवत्तु लीलाकैवल्यं ॥ ३३ ॥**

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४**

पादौ जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुराद्यं पुरुषं महान्तम् । न तस्य कार्य्यं करणञ्च विद्यते न तत् समश्चाप्यधिकश्च दृश्यते । पराच शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान-बलक्रिया चेत्यादिश्रुतिभ्यः । सर्वोपेतावेति सामान्य परिहारेऽपि विशेष युक्त्यर्थं पुनराशङ्का ॥ ३१ ॥

यत् प्रयोजनार्थं सृजत्यादिस्तदूनत्वादपूर्णता इत्यत आह अथैष एव परम आनन्द इत्यादिना कृतकृत्यत्वा न प्रयोजनाय सृष्टिः ॥ ३२ ॥

किन्तु यथा लोके मत्तस्य सुखोद्रेकादेव नृत्यगानादि लीला न तु प्रयोजनापेक्षया । एवमेवेश्वरस्य नारायण संहितायाञ्च । सृष्ट्यादिके हरिर्नैव प्रयोजनमपेक्षतु कुरुते केवलानन्दं यथा मत्तस्य नर्त्तनम् । पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः । मुक्ता अप्यायुःकामाः स्युः किमुता-स्याखिलात्मन इति देवस्यैव स्वभावोऽयमाप्तकामस्य का स्पृहेति श्रुतिः ॥ ३३ ॥

सर्वकर्तृत्वे वैषम्य नैर्घृण्ये तस्येत्यतो वक्ति कर्म्मापेक्षया फलदातृत्वान्न तस्य नैर्घृण्ये पुण्येन पुण्यं लोकं नयति पापेन पापं इत्यादि श्रुतिः ॥ ३४ ॥

न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥

उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

सर्वधर्म्मोपपत्तेश्च ॥ ३७ ॥

इति श्रीमत् कृष्णद्वैपायन-कृत ब्रह्मसूत्र-
भाष्ये श्रीमदानन्दतीर्थ भगवत् पाद
विरचिते द्वितीयाध्यायस्य
प्रथमः पादः समाप्तः ।

यदपेक्षयासौ फलं ददाति न तत् कर्म्म एव ह्येव साधु कर्म्म कारयति तथा यमेभ्यो लोकेभ्य उन्निनोषते । एष उ एवा साधु कर्म्म कारयति तं यमधो निनीषत इति श्रुतिः । कर्मणोऽपि तन्निमित्तत्वादिति चेन्न तस्यापि पूर्वकर्मकारण-मित्यनादित्वात् कर्म्मणः । भविष्यपुराणे च । पुण्यपापा-दिकं विष्णुः कारयेत् पूर्वकर्म्मणः । अनादित्वात् कर्म्म-णश्च न विरोधः कथञ्चनेति ॥ ३५ ॥

न च कर्म्मापेक्षत्वे नैश्वरस्य अस्वातन्त्र्यम्। द्रव्यं कर्म्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेत्यादिना कर्म्मादीनां सत्त्वस्याऽपि तदधीनत्वात् न च पुनर्वैषम्याद्यापातेन दोषः। तादृश वैषम्यादेरुपलभ्यमान-त्वात् । स कारयेत् पुण्य मथाऽपि पापं न तावता दोषमपि क्वचित् स्यात् । ईशो यतो वा गुणदोष सत्वे स्वयं परो-ऽनादिरादिः प्रजानामित्यादि चतुर्वेदशिखायाम् ॥ ३६ ॥

अवशिष्टैरुपसंहरति । गुणाः श्रुताः विरुद्धाश्च देवे

रचनानुपपत्तेश्चानुमानम् ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥

पयोऽम्बुवच्चेत्तत्रापि ॥ ३ ॥

सन्त्यश्रुता वर्यपनैवात्रशङ्का चिन्त्यावै ह्यचिन्त्यश्च तथैव हिदोषाः श्रुताश्चनार्थोर्हि तथा प्रतीता इति सर्वगुणोपपत्तिश्रुतिः ॥ ३७ ॥

इति श्रीकृष्णद्वैपायनकृते ब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थ भगवत् पादविरचिते द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ।

---

इतरेषां चानुपलब्धेरिति सामान्यतो निराकरणं समन्वयानां कृतं विशेषतो निराकरोत्यस्मिन् पादे अचेतन प्रवृत्तिमतं प्रथमतो निराकरोति । अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमान परिकल्पितं प्रधानं जगत् कर्तृ च शब्देन प्रमाणाभावं दर्शयति ॥ १ ॥

चेतनस्य स्वतः प्रवृत्तिदर्शनाच्च ॥ २ ॥

पयोऽम्बुवदचेतनस्यापि प्रवृत्ति र्युज्यत इति न युक्तं एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्यायां दिश मनु एतेन द्रावयमीशाऽज्ज भवतीत्यादि तत्रापि ईश्वर निमित्त प्रवृत्ति श्रुतिः ॥३॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

न ऋतेत्वा क्रियते किञ्च नारे इति तद्व्यतिरेकेण एकस्यापि कर्म्मणानवस्थिते रनपेक्षितमेवाचेतन वादिमतम् ॥ ४ ॥

सेश्वरसांख्यमत निराकरोति। यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते। एवं प्रधानादीश्वरानुगृहीतं जगदितो ब्रवीति। यच्च किञ्चिज्जगत् सर्वं दृश्यतेऽदृश्यतेऽपि वा। अन्तर्वहिश्च तत् सर्वं व्याप्य नारायणः स्थित इति। ब्रह्मणैवेदमाविरासीद् ब्रह्मणि स्थितं ब्रह्मणैव लयमभ्येति ब्रह्मैवाधस्तात् ब्रह्मोपरिष्टाद् ब्रह्म मध्यतो ब्रह्म सर्वतो ब्रह्मै वेदं सर्वमित्यादिश्रुतिभ्योऽन्यज्जगतोभावात्तृणादीनां पर्ज्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य। स एव भूयो निजवीर्य्यनोदितां स्वजीवमायां प्रकृतिसिसृक्षतीम्। अनामरूपात्म निरूपनामनो विधित्समानोऽनुससार शास्त्रकृदिति भागवते। द्रव्यं कर्म्म च कालश्चेत्यादि च। च शब्देन प्रकृतिसत्वादि प्रदातृत्वं चाङ्गीक्रियते ॥ ५ ॥

लोकायतिकपक्षं निराकरोति। यस्य धर्म्माधर्म्मौ न स्तस्तत् सिद्धान्ते किं प्रयोजनं अतः स व्याहते रेवोपेक्ष्यः ॥ ६ ॥

पुरुषाश्मवदिति चेत् तथापि ॥ ७ ॥

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

अन्यथानुमितौ च ज्ञशक्ति वियोगात् ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

पुरुषोपसर्ज्जना प्रकृतिकर्तृवादं निराकरोति यथा चेतनसंबन्धादचेतनमेव शरीर मश्मादिकमादाय गच्छति। एवमचेतनापि प्रकृतिः पुरुषसंबन्धात् प्रवर्त्तत इति चेत् न नकृतेत्त्वाक्रियत किञ्च नारे इति तत्रापि तथात्वे दृष्टान्ताभावात् ॥ ७ ॥

शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात्। अङ्गमङ्गी समादाय यथाकार्य्यं करोत्यसावित्यङ्गित्वव्यवहारोऽनुपपन्नः ॥ ८ ॥

प्रकृत्युपसर्ज्जन पुरुषकर्तृवादमपाकरोति शरीरसम्बन्धात् पुरुषः प्रवर्त्तत इत्यङ्गीकारेऽपि स्वतस्तस्या सामर्थ्याच्छरीरसम्बन्ध एवायत्तः ॥ ९ ॥

सकलश्रुतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसम्। श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम्। वदन्ति तद्विरुद्धं यो वदेत् सहि नराधम इति पाद्मे ॥ १० ॥

परमात्मारम्भवादमपाकरोति। महत्त्वाद्दीर्घत्वाच्च यथा कार्य्यमुत्पद्यते एवं ह्रस्वत्वात् पारिमाण्ड्याच्च कार्य्यमुत्पद्यते। वाशब्दादन्यार्थे तयोरपि न स्यात्। विशेषकारणाभावात्

उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१३॥

नित्यमेव च भावात् ॥ १४ ॥

रूपादिमत्त्वाच्च विपर्य्ययो दर्शनात् ॥ १५ ॥

उभयथा च दोषात् ॥ १६ ॥

ईश्वरेच्छाया नित्यत्वे तदभावेऽपि परमाणुकर्म्माभावान्नेदानीमपि स्यात्। अनित्यत्वेतत्कारणाभावात्। अतः परमाणुचेष्टाभावात् तत् कार्य्याभावः। वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते। स्वतएव काले विशेषाङ्गीकृतेश्च ॥ ११ ॥ १२ ॥

कार्य्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य भिन्नत्वसाम्यात् समवायत्वपेक्षयानवस्थितिः न च तत् प्रमाणं प्रथमसम्बन्धासिद्धौ च तदसिद्धिः। स्वनिर्वाहकत्वे समवाय एव न स्यात् ॥ १३ ॥

नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव च कार्य्यं स्यात् अन्यथा न कदाचित् ॥ १४ ॥

रूपादिमत्त्वाच्च परमाणूनां अनित्यत्वं तथादृष्टत्वात् लोके ॥ १५ ॥

नित्यत्वे परमाणूनां तद्वत् सर्वं नित्यं स्यात् विशेष-

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

---

प्रमाणाभावात् । अनित्यत्वे कारणाभावात्तदुत्पत्त्यभावः ॥ १६ ॥

श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्षता । आन्विक्षिकीं तर्कविद्यामनुरक्तोनिरर्थकामिति मोक्षधर्म्मे ॥ १७ ॥

परमाणुपुञ्जवादिमतं निराकरोति । समुदायस्यैक हेतुत्वं न युज्यते उभयहेतुकेऽप्यन्योऽन्याश्रयत्वात्तदप्राप्तिः । अन्यथा सर्वदा समुदायः स्वत्वं स्यात् ॥ १८ ॥

सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवक्रियत इति चेत् न एवं कार्य्यमुत्पाद्य तस्य विनष्टत्वात् परस्परप्रत्ययः । तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्य्यं भवत्येव इति हि तस्य नियमः ॥ १९ ॥

कार्य्योत्पत्ताविव कारणस्य नाशाच्च न विशेषकार्य्योत्पत्तिः ॥ २० ॥

कारणे विनष्टे कार्य्यमुत्पद्यते चेत्तत् कार्य्यमिति

प्रतिसंख्याऽप्रतिसंख्या निरोधाप्राप्तिरविच्छे-
दात् ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥

आकाशे चाविशेषात् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥

नासतोऽदृष्टत्वात् ॥ २६ ॥

प्रतिज्ञाहानिः । तत्काले कारणमस्ति चेत् विनाश-कारणाभावाद्यौगपद्यं सर्वकार्य्याणाम् ॥ २१ ॥

कारणे सति कार्य्यं भवत्येवेति नियमान्निःसन्तानः स सन्तानस्य विनाशो न युज्यते ॥ २२ ॥

कारणे सति कार्य्यं भवत्येवेति नियमे सर्वदा कार्य्यभावान्न कार्य्यकारणविशेषः अनियमे कार्य्यानुत्पत्तिः ॥ २३ ॥

दीपादिषु विशेषदर्शनात् । क्षणिकत्वे नान्यत्रापि क्षणिकत्वमनुमीयते चेदाकाशादिष्वपि विशेषदर्शनादन्यत्रापि तदनुमीयते ॥ २४ ॥

तदेवेदमिति प्रत्यभिज्ञानाच्च प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ॥ २५ ॥

शून्यवादमपाकरोति अदृष्टत्वादसतः कारणं त्वं न युज्यते । असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धि-

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

नाभाव उपलब्धेः ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

क्षणिकत्वाच्च ॥ ३१ ॥

सर्वथानुपपत्तेश्च ॥ ३२ ॥

नैकस्मिन्नसम्भवात् ॥ ३३ ॥

वर्जितानां खपुष्पादीनामपि सकाशात् कार्य्यसिद्धिः च प्रव्दान्न चेदन्यत्रापि ॥ २६ ॥

न स्यात् अविशेषात् ॥ २७ ॥

न च जगदेव शून्यमिति वाच्यं दृष्टत्वात् ॥ २८ ॥

न च दृष्टस्यापि स्वप्नादिवदभावः तस्योत्तरकाले स्वप्नोऽयं नायं सर्पइत्याद्यनुभावात्। न च एतादृशं प्रमाणमस्ति ॥ २९ ॥

विज्ञानवादमपाकरोति न विज्ञानमात्रं जगत्तथाभावानुभवात् ॥ ३० ॥

ज्ञानं क्षणिकमर्थानाञ्च स्थायित्वमुक्तम्। अतश्चानैक्यम् ॥ ३१ ॥

प्रमाणाभावात् सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ॥ ३२ ॥

सदसद्वादमतं दूषयति। सत् स्यादसत् स्यात् सद-

एवञ्चात्माऽकार्त्स्न्यम् ॥ ३४ ॥

न च पर्य्यायादप्यविरोधोविकारादिभ्यः ॥३५॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

पत्युरसामञ्जस्यात् ॥ ३७ ॥

सत् स्यादन्योन्यश्च स्यादित्येतन्नैकस्मिन् युज्यते। अदृष्टत्वेनासम्भवात् ॥ ३३ ॥

जीवस्य शरीरपरिमितत्वाङ्गीकारे अश्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकार्त्स्न्यं स्यात् ॥ ३४ ॥

तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यं विकारित्वादनित्यत्वप्रसक्तेः ॥ ३५ ॥

परिमाणाभावे स्वरूपाभावप्राप्तरन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभयनित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात् ॥ ३६ ॥

पाशुपतपञ्चमथाकरोति यं कामयेतं तमुग्रं कृणोमि तं ब्रह्माणं तमृषितं सुमेधां अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवहं तवाउ अस्य देवस्य मीढ़ षीवयाविष्णोरंशस्य प्रभृतेर्हरिभिः। विदेहिरुद्रो रुद्रियं महित्वं याशिष्टं वर्त्तिरश्विनाविरावत् एकोहवै नारायण आसीन्न ब्रह्मा नेशान इत्यादि श्रुतेः। पारतन्त्रेण सामञ्जस्यात् स पशुपतिरीश्वरो जगत्कर्त्ता ॥ ३७ ॥

सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

उत्पत्त्यसम्भवात् ॥ ४२ ॥

अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन कृतपुरुषवत् ॥ ३८ ॥

पृथिव्या अधिष्ठाने स्थितो हि कुलालादि कार्य्यं करोति न चास्य तदस्ति ॥ ३९ ॥

इदमेव जगत्तस्य करणवदधिष्ठानादिरूप नित्यस्यापि कस्यचिद्भावाद्युज्यते इति चेन्न भोगादि प्राप्तेः । उत्पत्तिविनाशौ सुखदुःखभोगाश्च प्राप्यन्ते तद्गताः ॥ ४० ॥

देहवत्त्वेऽन्तवत्त्व मन्यथा ज्ञानभावः । शरीरिण एवहि ज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तु श्रुत्यैव सर्वे विरोधाः परिहृताः । यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ज्ञानात्मकः परः ऐश्वर्य्यात्मकः शक्त्यात्मक इति । बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे बुद्धिमान् मनोवान् अङ्गप्रत्यङ्गवानिति । सदेहः सुखगन्धश्च ज्ञानभासत्पराक्रमः । ज्ञानाज्ञानः सुखी मुख्यः स विष्णुः परमोऽक्षर इत्यादिकया ॥ ४१ ॥

न च कर्त्तुः करणम् ॥ ४३ ॥

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

इति श्रीमत् कृष्णद्वैपायनकृतब्रह्मसूत्र-
भाष्ये श्रीमदानन्दतीर्थ भगवत्
पाद विरचिते द्वितीया-
ध्यायस्य द्वितीयः पादः
समाप्तः।

शक्तिपक्षं दूषयति स हि पुरुषाननुगृहीतस्तोभ्य उत्-
पत्तिं दृश्यते ॥ ४२ ॥

यदि पुरुषोऽङ्गीक्रियेत तस्यापि करणाभावादनुप-
पत्तिः ॥ ४३ ॥

यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव
सृष्ठ्याद्युपपत्तेरीश्वर वादान्तर्भावात् ॥ ४४ ॥

सकालस्मृत्यादिविरुद्धत्वाच्चासमञ्जसम् ॥ ४५ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
श्रीमदानन्दतीर्थभगवत्पूज्यपाद-
विरचिते द्वितीयाध्यायस्य
द्वितीयपादः समाप्तः।

---

न वियदश्रुतेः ॥ १ ॥

अस्ति तु ॥ २ ॥

गौण्यसम्भवात् ॥ ३ ॥

शब्दाच्च ॥ ४ ॥

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

जीवपरमात्माधिभूताधिदैवेषु श्रुतीनां परस्परविरोध-मपाकरोत्यनेन पादेन । न वियदनुत्पत्तिमत् तथा श्रुतेः ॥ १ ॥

अस्त्येवोत्पत्तिश्रुतिः । आत्मन आकाशः सम्भूत इत्यादि ॥ २ ॥

अनादिर्वा अयमाकाशः शून्यो लौकिकः इत्यादि श्रुतिर्गौणी । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवात् ॥ ३ ॥

अथ हरावनित्यानि पुरुषः प्रकृतिरात्मा काल इत्यथ यान्यनित्यानि प्राणः शुद्धीभूतानि भौतिकानीति यानिहवा उत्पत्तिमन्ति तान्यनित्यानि यानिह वा अनुत्पत्ति-मन्ति तानि नित्यानि नह्येतानि कदाचनोत्पद्यन्ते न वा विलीयन्त इति पुरुषः प्रकृतिरात्मा काल इति । अथैतान्युत्पत्तिमन्ति चानुत्पत्तिमन्ति च प्राणः शुद्धाकाश इति भाल्लवेयश्रुतेश्च भागशोह्युत्पद्यन्ते इति ॥ ४ ॥

स्यादेवैकस्य उत्पत्तिमत्त्वमनुत्पत्तिमत्त्वं च गौणमुख्य-त्वापेक्षया यथा ब्रह्मशब्दः । अथ कस्मादुच्यते परं ब्रह्मेति

**प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

**यावद्विकारन्तु विभागो लोकवत् ॥ ७ ॥**

**एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥**

बृंहति बृंहयति चेति श्रुतेः। परे ब्रह्मणि मुख्योऽपि गौणत्वेन वि रञ्चादिष्वपि वर्त्तते। अत एवा ब्रह्मत्वं च तेषाम्। एवमन्नादप्यनुत्पत्तिमच्छब्दः ॥ ५ ॥

ब्रह्मणोऽन्यस्य नित्यत्वे इदं सर्वमसृजतेति प्रतिज्ञाहानिः। आकाशस्यापि सर्वस्मादव्यतिरेकात्। आत्मा वा इदमेक एवाग्र आसीत् सदेव सौम्येदमग्र आसीत् एकमेवा द्वितीयं इदं वा अग्रे नैव किञ्चनासीदित्यादि श्रुतिभ्यः ॥ ६ ॥

विभक्तत्वाच्च विकारित्वं युक्तम्। विकारिण एव हि लोके विभक्ता दृश्यन्ते। एको विभक्तः परमः पुरुषो विष्णुरुच्यते। प्रकृतिः पुरुषः कालस्त्रय एते विभागतः। चतुर्थस्तु महान् प्रोक्तः पञ्चमाहंकृतिर्मता। तद्विभागे न जायन्ते आकाशाद्याः पृथक् पृथक्। योविभागोविकारः स सोऽविकारः परो हरिः। अविभागात् परानन्दो नित्योऽनित्यो गुणात्मकः। विभागोह्यल्पशक्तिः स्यान्नतदस्ति जनार्द्दन इति बृहत्संहितायाम् ॥ ७ ॥

अथ नित्याश्चानित्याश्च तेजोवन्नान्याकाश इति तान्यनित्यानि वायुर्वाव नित्या वायुना हि सर्वाणि भूतानि

**असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥**

नेनोयन्ते । अथ चेतनाश्चा चेतनाश्च तेजोवन्नान्याकाश इति तान्यचेतनानि वायुर्वाय चेतनो वायुना हि सर्वाणि भूतानि विजायन्ते । कुविदं गमनसाये वधासः पुरा देवा अनवद्या स आसन् ते वायवे मनवे बाधिताया वा सयन्नूषसं सूर्य्येण सा वा एषा देवतानादिर्योऽयं पवन इति । यस्य नादि न मध्यं नान्तो नोदयो ननिम्लोच इत्यादि श्रुतिभ्यो वायोरपि अनुत्पत्तिरिति । अतोऽब्रवीत् एतेन मुख्या-मुख्यानुत्पत्तिवचनेन विभक्तत्वाच्च वायुत्पत्तिश्रुतिरपि व्याख्याता । नित्यः परमनित्यश्च तथा नित्यः परस्तथा । चतुर्द्धैतज्जगत् सर्वं परानित्यन्तु पार्थिवम् । अनित्यानि तु भूतानि नित्यो वायुरुदाहृतः । परस्तु नित्यः पुरुषः प्रकृतिः काल एव च । एतच्चतुष्टयं विष्णुः स्वयं नित्यः परात्परः । प्रतिव्युच्यव्युच्य चासावतीत्य च जनार्द्दनः । धारयत्यनिशं देवो नित्यानन्दैकलक्षण इति कौर्म्मे ॥ ८ ॥

असद्वा इदमग्र आसीत् ततो वै सदजायत असतः सदजायतेत्यादि श्रुतिभ्यः सतोऽप्युत्पत्तिः श्रूयत इति चेन्न, अनुत्पत्तिरेव सतः तु शब्देनोक्तव्यवस्थामपाकरोति, नह्यसतः सदुत्पद्यते अदृष्टत्वादनुपपत्तेः । तद्वा एतत् ब्रह्माहुर्वृंहति बृंहयति चेति तद्वात्र तदसदाहुर्नह्यसादयति कश्चन । तद्वा एतत् परमाहुः परतो हि तदुदोच्यत इति श्रुतेः । असच्छब्दो ब्रह्मवाचो देवानां पूर्वे युगे असतः सदजायते इति ब्रह्म वा असद्वा प्राणः प्राणोवाव

तेजोऽतस्तथाह्याह ॥ १० ॥

आपः ॥ ११ ॥

महान् सह आसीत्तेजोवन्न इत्याचचत इति पैङ्गिश्रुतिः। त्वं देवशक्त्यां गुणकर्मयोनौ रेत स्वजायां कविरादधेजः। ततो वयं सत्प्रमुखा यदर्थे बभूविमात्मन्! करवाम किन्तु इति भागवते। अजायमानो बहुधा विजायत इति च प्रत्यचत्वं हरेर्जन्म न विकारः कथञ्चन। पुरुषः प्रकृतिः कालो महानित्यादिषु क्रमात्। विकार एव जननं पुरुषे तद्विशेषणम्। परतन्त्रविशेषो हि विकार इति कीर्त्तित इति पाद्मे। अविकारोऽपि भगवान् सर्वशक्ति-त्वहेतुतः। विकारहेतुकं सर्वं कुरुते निर्विकारवान्। शक्ति-शक्तिमतोश्चापि न विभेदः कथञ्चन।—इति अवि-भिन्नापि सेच्छादिभेदैरपि विभाव्यत इति भागव-तन्त्रे ॥ ८ ॥

वायोरग्निरित्यादेर्नान्यत उत्पत्तिर्ग्राह्या अतएव परा-त्तदपि जायते। तत्तेजोऽसृजतेति ह्याह कारणत्वेनाप्यु-क्तोऽप्यमुख्यतयान्येषामपि शब्दोक्तत्वात् पुनरुक्तिः उभय कारणत्व-निवृत्त्यर्थम् ॥ १० ॥

ब्रह्मैवेदमग्र आसीत्तदपोऽसृजत तदिदं सर्वमितिश्रुते रग्नेराप इत्युक्तोऽपि ब्रह्मण एव वादिसृष्टिः। एतस्माज्जा-यते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीत्यादि च कर्त्ता सर्वस्य वै विष्णुरेक

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥

एव न संशयः। इतरेषान्तु सत्वाद्यायत एव तदाज्ञयेति च भविष्यपुराणे। वामने च—तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तौ प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमञ्जसेति धर्म्मात् खेदादिदृष्टेः पुनः प्रतिषेधः ॥ ११ ॥

ता अप ऐचन्त बह्वयः स्यामः प्रजायेमहीति ता अन्नमसृजन्तेति अद्भ्योऽन्नसृष्टिः श्रूयते। अद्भ्यः पृथिवीति कुत्रचित् पृथिवीसृष्टिः अतो विरुद्धत्वाद प्रामाण्यमित्यतो वक्ति पृथिवी तत्रान्न शब्देनोच्यते भूताधिकारत्वात्। कार्त्स्न्य प्रचुरा पृथ्वी पृथिवी नान्नस्य तथा विशेषः। आपश्च पृथिवी चान्नं पृथिवी वा अन्नं ता अपोऽन्नमसृजन्त पृथिवी वा अन्नमित्यादि शब्दान्तराच्च। आदिशब्दाद्युक्तिः। अपौरुषेयत्वेनादौ यस्य वाक्यस्य नाप्रामाण्यमित्यादि। कौर्म्मे च—विरोधो वाक्ययोर्यत्र नाप्रामाण्यं तदिष्यते। यथा विरुद्धता न स्यात् तथार्थः कल्प्य एतयोरिति। रक्तोऽग्निरुदकं शुक्लं कृष्णैव पृथिवी स्वतः। नाभिपद्माश्रि सम्बन्धात् पीता सेत्यभिधीयते। स्तनरक्ताभिसम्बन्धाद्रक्तोदकवद्वतः। शुक्लत्वमित्यवमेव वर्णान्तरगतिर्भवेत्। विष्णुवीर्य्याभियोगाच्च पीतत्वं भुव इष्यते। पूर्णवीर्य्यं हि भगवाननादिः पुरुषोत्तम इति व्योमसंहितायाम् ॥ १२ ॥

प्राणानां ग्रन्थिरसि रुद्रोमाविशान्तकः तेनान्नेनाप्या-

विपर्य्ययेणतु क्रमोऽत उपपद्यते च॥ १४॥

यस्येत्यादिनाऽन्यः संहर्त्ता प्रतीयत इति। अतो ब्रूते। तस्याभिध्यानाद् योजनात् तत्वभावाद्भूयश्चान्ते विश्वमाया-निवृत्तिरिति सम्बन्ध लयस्य तदभिध्याननिमित्तत्वलिङ्गात् तत् कर्तृकत्वं प्रतीयते किमु सादेर्जगतः इत्येतस्मादेव संहारकर्त्ता विष्णुरिति प्रतीयते। किमु यमप्येति भुवनं साम्पराये स नो हरिर्घृतमिहायुषे तु देवः य इदं सर्वं विलापयति स हरिः परः परमात्मेत्यादि श्रुतिभ्यः। इत्येव शब्दः। स्रष्टाः पाता च संहर्त्ता स एको हरिरीश्वरः स्रष्टृत्वादिकमन्येषां दारुयोषावदुच्यते। एकदेश क्रिया चात्र न तु सर्वात्मनेरितम्। सृष्ट्यादिकं समस्तं तु विष्णोरेव पदाङ्गवेदिति स्कान्दे। निमित्तमात्र मीशस्य विश्वसर्गनिरोधयोः। हिरण्यगर्भः शर्वश्च कालाख्योरूपिणस्तथेति भागवते। स ब्रह्मणा विसृजति स रुद्रेण विलापयति सोऽनुत्पत्तिरलयः एक एव हरिः परः परानन्द इति च महोपनिषदि॥ १३॥

अतएव ह्रीदं पराक्रमादुत्पद्यते क्रमाद् विलीयते नासा वुदेति नास्तमितीति भाल्लवेयश्रुतौ क्रमाल्लयः प्रतीयते। अक्षरात् परमादेव सर्वमुत्पद्यते क्रमात्। व्युत्क्रमाद्विलयश्चैव तस्मिन्नेव परात्मनीतिचतुर्वेदशिखायाम्। व्युत्क्रमाल्लयः प्रतीयते। अत आह। क्रमवचनमपि विपरीतक्रमापेक्षया। कर्त्ता प्राणादिकस्यास्य हन्ता भूम्या-

**अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति-चेन्नाविशेषात् ॥ १५ ॥**

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्त-द्भावभावित्वात् ॥ १६ ॥**

दिकस्य च। यः क्रमाद् व्युत्क्रमाच्चैव स हरिः पर उच्यत इति। अतएव भाल्लवेयश्रुतिवचनात्। अनुरूपक्रमः सृष्टौ प्रतिरूपो लये क्रमः। इति क्रमेण भगवान् सृष्टि-संहारकृद् विभुरिति च पाद्मे। पूर्वेषां पूर्वेषां सामर्थ्या-धिक्यादुत्पद्यते च। वामने च। पूर्वे पूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम्। सामर्थ्याधिक्यमेतेषां पश्चादेव लयस्तथा। व्याप्तिश्चाभ्यधिका तेषां मत एव न संशय इति ॥ १४ ॥

प्राणात्मनो मनसश्च विज्ञानं यच्छेद्वाङ्मनसी प्राज्ञ-स्तद्यच्छेज्ज्ञान आत्मनीति लिङ्गाद्विज्ञान-मनसी अन्तरा विपरीतक्रम इति चेन्न विशेष-प्रमाणाभावात् ॥ १५ ॥

मनसश्च विज्ञानमिति व्यपदेशश्चराचरेष्वालोचनाद्वि-ज्ञानं भवतीति भागापेक्षया स्यात्। न विज्ञानत्वापे-क्षया। स्कान्दे च। परादव्यक्तमुत्पन्नमव्यक्तात्तु महां-स्तथा। विज्ञानतत्त्वं महतः समुत्पन्नं चतुर्मुखात्। विज्ञानतत्त्वात्तु मनो मनस्तत्त्वाच्च खादिकम्। एवं वाद्या परा सृष्टिरन्तस्तद्व्यक्त्यपेक्षया। विपरीतक्रमोऽन्नेयो यस्मादन्तेहरेर्दृशिरिति ॥ १६ ॥

नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

ज्ञोऽतएव ॥ १८ ॥

सदिदं सर्वं विलाप्यान्तस्तमसि निलीनस्तद्विलाप्य व्युत्तिष्ठते य इदं सर्वं विसृजति विज्ञापयति प्रस्थापयति आच्छादयति प्रकाशयति विमोचयति एक एवेति श्रुतेः। परमात्मापि न विलीयते। अश्रुतत्वात्तु तद्ब्रह्मलयस्य निलीनशब्देनापि हि तत्समुच्यते तुच्छेनाभ्व पिहितं यदासीदिति श्रुतेः। स एतस्मिंस्तमसि निलीनः प्रकृतिं पुरुषं कालं चानुपश्यति नैवं पश्यति कश्चनेति पैङ्गिश्रुतिः। नित्यो नित्यानां चेतनश्चेतनानां सनित्यो निर्गुणो विभुः। परः परमात्मा नित्यो विभुः कारणे लोकसाक्षी परगुणैः सर्वदृक् शाश्वतश्चेत्यादि श्रुतिभ्यो नित्यत्वाच्च।

नित्यो नित्यानामिति जीवस्यापि नित्यत्वमुक्तं सर्वत्र चात्मनो व्युच्चरन्ति इत्युत्पत्तिरुच्यते अतो विरोध इति अत आह जीवोऽप्यत एव परमेश्वरादुत्पद्यते शब्दादेव ते वात्र ते चिदात्मानोऽविनष्टाः परं ज्योतिर्निविशन्ति अविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचनेति कात्यायन श्रुतिः।

नित्यस्यापि हि जीवस्योपाध्यपेक्षया उत्पत्तिर्युज्यते। उत्पद्यन्ते चिदात्मानोनित्यानित्याः परात्मनः। उपाध्यपेक्षया तेषामुत्पत्तिरपि गीयत इति च व्योमसंहितायाम् ॥ १७ ॥

व्यासाद्यात्मानश्चेतनानिर्गुणाश्च सर्वात्मानः सर्वरूपा

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

स्वात्मना चोत्तरयोः ॥ २० ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अनन्त इति कात्यायनश्रुतौ व्याप्तत्वं प्रतीयते। अणुर्ह्येष आत्मायं वा एते सिः नीतपुष्पं वा पुष्पं-चैत गौप्यवन-श्रुतावणुत्वमित्यतो विरोध इति। अतो ब्रवीति हेतूनां सकाशादणुरेव सोऽस्माच्छरीरादुत्क्रम्यामुं लोकमभिगच्छत्यमुष्मादिमं लोकमभिगच्छति स गर्भो भवति स प्रसूयते स कर्म्म कुरुत इति पौष्यायण श्रुतिः ॥ १८ ॥

तत्र स्वातन्त्र्यप्रतीतिः। एकः प्रसूयते जन्तुरेक एव प्रलीयते एकोऽनुभुङ्क्ते सुकृत मेक एव च दुष्कृतमित्यादेश्च स्वयमेवेत्यतो वक्ति स एतेनैव स्वात्मना परेणेमं गर्भमाविशन्ति परेण कर्म्म कुरुते परेण नीयते परेणोन्नीयते तं वाव तमभिवदन्ति स्वात्मेति एष ह्यानन्दमादत्त एष ह्येनं जीवमभिजीवयत्येष उत्क्रमयत्येष आगमयतीत्युत्तरवाक्ययोः परमात्मनैवोत्क्रान्त्यादयः ॥ १९ ॥ २० ॥

व्याप्ता ह्यात्मानश्चेतना निर्गुणाश्चेति व्याप्तिश्रुतेर्नाणुर्जीव इति चेन्न स आत्मेदं सृजति स द्विधेदं विभर्त्यन्तर्बहिश्च स बहुधेदमनु प्रविश्यात्मनोऽभिनयति स आत्मा स आत्मनः स ईशः स विष्णुः स परः परो वरीयानिति परमात्माधिकारत्वात्। एकशब्दैर्द्विशब्दैश्च बहुशब्दैश्च केशवः। एक एवोच्यते वेदैस्तावता नास्य भिन्नतेति भविष्यत्पुराणे

स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥

अविरोधश्चन्दनवत् ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि २४

गुणाद्वा लोकवत् ॥ २५ ॥

तदयं प्राणोऽधि तिष्ठतितदुत्क्रान्त्यधिया तेन यातमित्यादि च ॥ २१ ॥

एष ह्यात्मा ह्यणुतो मानशक्तिस्तथाप्यसौ। प्रमिति याति वेदैः पूर्णोऽचिन्त्यः सर्ववेदैकयोनिः। सर्वाधीशः सर्ववित् सर्वकर्त्तेति वाक्यशेष आत्मशब्दोन्मानाभ्यां च आत्मेयः परं ब्रह्म परानन्दादिकाभिधाः। वदन्ति विष्णुमेवैकं नान्यता सङ्गतिः क्वचिदिति कौर्मे ॥ २२ ॥

अणोरपि जीवस्य सर्वशरीरव्याप्तिर्युज्यते यथा हरिचन्दनविप्रुष एकदेशपतितायाः सर्वशरीरव्याप्तिः। यथा अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति। यथा व्याप्य शरीराणि हरिचन्दनविप्रुष इति ब्रह्माण्डपुराणे ॥ २३ ॥

स्थ्यगसस्थ्यगवस्थान विशेषाद् युज्यते हरिचन्दनस्येति चेन्न हृदि ह्येष आत्मेति जीवस्यापि तथाभ्युपगमात् ॥२४॥

यथा लोकस्य प्रकाशगुणेन व्याप्ति र्ज्योतीरूपेणाव्याप्तिः एवं चिद्रूपेणाव्याप्ति रिति वा। स्कान्दे च – असम्यक् सम्यगितिवद्दावस्थाभेदतः स्फुराव्याप्त्य व्याप्तियुता स्वरूपचिद्गुणेनैव

**व्यतिरेको गन्धवत्॥ २६॥**

**तथा च दर्शयति॥ २७॥**

**पृथगुपदेशात्॥ २८॥**

नान्यथा। चिद्गुणस्य स्वरूपत्वा त्तद्व्याप्तिश्चेति युज्यते शक्तियोगात् सुराणाञ्च विविधा तु व्यवस्थिति रिति च॥ २५॥

स नित्यो निरवयवः पुण्ययुक् पापयुक् च स इमं लोकममुञ्चावर्त्तते स विमुच्यते स एकधा, न सप्तधा, न दशधेति गौपवनश्रुता वेकस्या बहुत्वं प्रतीयते। स पञ्चधा सप्तधा दशधा भवति शतधा सहस्रधा गच्छति स विमुच्यत इति पाराशर्य्यायण श्रुतौ बहुरूपत्वञ्च प्रतीयते अतो विरोधं परिहरति। यथा पृथग् गच्छति एव मंशिनो जीवादंशाः पृथग् गच्छन्ति। अथैक एव स न गन्धवद्व्यतिरिच्यते अथैको भवति। अथ बह्वी भवति तं यथा यथेश्वरः प्रकुरुते तथा तथा भवति सोऽचिन्त्यः परमो गरीयानिति शाण्डिल्यश्रुतिः। अचिन्त्ययैष शक्त्यैव एकोऽवयवर्जितः। आत्मानं बहुधा कृत्वा क्रीड़ते योगसम्पदेति पाद्मे॥ २६॥॥ २७॥

तत्त्वमस्यहं ब्रह्मास्मीत्यादिषु जीवस्य परेणा भेदः प्रतीयते। नित्यो नित्यानां चेतन श्चेतनानां द्वा सुपर्णेत्यादिषु भेदः। अत उच्यते भिन्नोऽचिन्त्यः परमो जीवसङ्घात् पूर्णः परोजीवसङ्घोह्यपूर्णः। यतस्त्वसौ नित्यमुक्तोह्ययञ्च बन्धान्मोक्षन्ततएवाभिवाञ्छेदिति सोपपत्तिककौशिक श्रुतेर्भिन्नएव जीवः॥ २८॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥
यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥
पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

ज्ञानानन्दादिब्रह्मगुणा एवास्य यतः सारः स्वरूप मतो भेदव्यपदेशः यथा सर्वगुणात्मकत्वात् सर्वात्मकत्वं ब्रह्मण उच्यते। सर्वं खल्विदं ब्रह्मेति। भविष्य पुराणे च — भिन्ना जीवाः परो भिन्न स्तथापि ज्ञानरूपतः। प्रोच्यन्ते ब्रह्म-रूपेण वेदवादेषु सर्वश इति ॥ २९ ॥

जीवस्याप्युत्पत्तिरुक्ता अतस्तस्य सोऽनादिना पुण्येन पापेन चानुबद्धः परेण निर्मुक्तः आनन्त्याय कल्पत इत्यना-दिकर्मसम्बन्ध आनन्त्याव्याप्तिश्च न युज्यत इत्यत आह। यावत् परमात्मा तिष्ठति अनाद्यनन्तत्वेन एवं जीवोऽपि नित्यः परोनित्या जीवा उत्पद्यन्ते म्रियन्ते च विमुच्यन्ते न चेति चाग्निवेश्मश्रुतिः। आत्मा नित्यः सुख दुःखे त्व-नित्ये जीवोऽनित्यो धातुरस्य त्वनित्य इति महाभा-रते ॥ ३० ॥

विज्ञानात्मासहा देवैश्च सर्वैः स आनन्दः सवलः स ओजः स परेणामुं लोकं नीयते स विमुच्यते जीवस्य ज्ञानानन्दादिरूपत्व मुच्यते स दुःखाद्विमुक्त आनन्दी भवति सोऽज्ञानाद्विमुक्तो ज्ञानी भवति सोऽवलाद्विमुक्तो वली भवति स नित्यो निरातङ्कोऽवतिष्ठत इति पैङ्गि श्रुता वनन्दादिरूपत्वं प्रतीयते अत आह यथा बालस्य सदेव

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवा-
ऽन्यथा ॥ ३२ ॥

कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

विहारोपदेशात् ॥ ३४ ॥

पुंस्त्वयौवनेऽभिव्यज्यते। एवं सतामेवानन्दादीनां व्यत्यपेक्षया तदुक्तिः। बलमानन्द ओजश्च समज्ञानमनाकुलम्। स्वरूपाण्येव जीवस्य व्यज्यते परमाद्विभोरिति गौपवन श्रुतिः ॥ ३१ ॥

व्यत्ययनङ्गीकारे देवानां नित्योपलब्धिरानन्दादीनां असुराणां नित्योऽनुपलब्धिर्मनुष्याणां नित्यं उपलब्ध्यनुपलब्धी प्रसज्येते नित्यानन्दो नित्याज्ञानो नित्यबलः परमात्मा नैव मसुराः एवमनेवञ्च मनुष्या इति अग्निवेश्य श्रुतिः। भविष्यत्पुराणे च–नित्यानन्द-ज्ञानबला देवा नैव तु दानवाः। दुःखोपलब्धिमात्रास्ते मानुषास्तूभयात्मकाः। तेषां यदन्यथा दृश्यं तदुपाधिकृतं मतम्। विज्ञानेनात्मयोग्येन निजरूपे व्यवस्थितिः। सम्यज्ज्ञानन्तु देवानां मनुष्याणां विमिश्रितम्। विपरीतन्तु दैत्यानां ज्ञानस्यैवं व्यवस्थितिरिति ॥ ३२ ॥

ईश्वरस्यैव कर्त्तृत्वमुक्तं यत्कर्म कुरुते तदभिसम्पद्य इति जीवस्योपलक्षते अत आह जीवस्य कर्त्तृत्वाभावे शास्त्रस्य प्रयोजकत्वप्राप्ते जीवोऽपि कर्त्ता ॥ ३३ ॥

स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेत्यादिना मोक्षोऽपि ॥ ३४ ॥

उपादानात् ॥ ३५ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविप-
र्ययः ॥ ३६ ॥

उपलब्धिवदनियमः ॥ ३७ ॥

शक्तिविपर्य्ययात् ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥

यथा च तक्षोभयथा ॥ ४० ॥

परात्तु तच्छ्रुतेः ॥ ४१ ॥

साधनाद्युपादानप्रतीतेश्च ॥ ३५ ॥

आत्मानमेव लोकमुपासीतेति क्रियायां व्यपदेशाच्च
अन्यथा तेनैव लोकमिति व्यपदेशः स्यात् ॥ ३६ ॥

तर्हि कथमीश्वरस्यैव कर्त्तृत्वमिति अतो वक्ति यथा-
ज्ञाने इदं ज्ञास्यामीत्यनियमः प्रतीयते एवं कर्मण्यपि
जीवस्य य आत्मान मन्तरोयमयतीति च श्रुतिः।
कुतः ॥ ३७ ॥

अशक्तित्वात् जीवस्य ॥ ३८ ॥

समाधानाभावाच्च ॥ ३९ ॥

स्वातन्त्र्यं प्रतीयते अत आह यथा च तक्षणः
कारयितृ नियन्तृत्वं कर्तृत्वं च विद्यते एवं जीव-
स्यापि ॥ ४० ॥

सा च कर्तृत्वशक्तित्वाद्द जीवस्यापरा परादेव। कर्तृत्वं

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

कारणत्वञ्च स्वभावश्चेतना धृतिः । यत् प्रसादात्ति मे सन्ति न सन्ति यदुपेक्षयेति पैङ्गिश्रुतिः ॥ ४१ ॥

ततः प्रयोजनकत्वं शास्त्रस्य नापद्येत कृतप्रयत्नापेक्षत्वात् प्रेरकत्वस्यादिशब्देन वैषम्यादिपूर्वकर्मप्रयत्नञ्च संस्कारञ्चाप्यपेक्ष्यतु । ईश्वरः कारयेत् सर्वं तच्चेश्वरकृतं स्वयम् । अनादित्वाददोषश्च पूर्ण-शक्तित्वतो हरेरिति भविष्यपुराणे । एतदेवं न चाप्येव मेतदस्ति च नास्तिचेति मोक्षधर्म्मे ॥ ४२ ॥

अंश एव होमे जीवाद्यांशो हि परमेश्वरः स्वयमंशैरिदं सर्वं कारयत्यचलो हरिरिति गौपवनश्रुतावंशत्वं जीवस्योपलभ्यते । नैवांशो न सम्बन्धो नापेक्षो जीवः परस्य तथापि तु यथायोगं फलदः प्रभुरेकराट् । न नियम्यः स कस्यापि ससर्वस्य नियामक इति भाल्लवेयश्रुतौ । अतो ब्रवीति । मां रक्षतु विभुर्नित्यं पुत्रोऽहं परमात्मनः । अवरः परेण पितरं यो ह्यस्यानुवेद पर एतावरेण यस्तद्वेद स पितुः पिता सत् यस्ताविजानात् स पितुः पिता सत् द्वा सुपर्णा सयुजा सखायेत्यादिना व्यपदेशादंशो जीवः । तथा च पाराशर्य्यायणश्रुतिः । अंशो ह्येष परस्य योऽयं

**मन्त्रवर्णाच्च ॥ ४४ ॥**

**अपि च स्मर्य्यते ॥ ४५ ॥**

**प्रकाशादिवन्नैवं परः ॥ ४६ ॥**

**स्मरन्ति च ॥ ४७ ॥**

पुमानुत्पद्यते च म्रियते च नानाह्येवं व्यपदिशति पिबेति पुबेति भ्रातेति च सखेति चेति । अन्यः परोऽन्यो जीवो नासावस्य कुतश्चन नायं तस्यापि न कश्चनेत्यन्यथा च काष्ठायणश्रुतिः । ब्रह्म दाशा ब्रह्म कितवा ब्रह्मै वेमे दश इत्यभेदेनाप्येकेऽधीयते । तथा चाग्निवेश्यश्रुतिः । अंशो-ह्येष परस्य भिन्नं ह्येनमधीयिरे इति । वाराहे च । पुत्र-भ्रातृसखित्वेन स्वामित्वेन यतो हरिः । बहुधा गीयते वेदैर्जीवोऽयस्तस्य तेन तु । यतो भेदेन चास्यायमभेदेन च गीयते । अतश्चांशत्वमुद्दिष्टं भेदाभेदं न मुख्यत इति ॥ ४३ ॥

पादोऽस्य विश्वाभूतानि ॥ ४४ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः । मनःषष्ठा-नीन्द्रियाणि प्रकृतिस्थानि कर्षतीति ॥ ४५ ॥

अनंशत्वश्रुतेर्गतिश्चाह । अंशत्वेऽपि न मत्स्यादि-रूपी पर एवं विधः । यथा तेजोऽंशस्यैव कालाग्नेः खद्योतस्य च नैकप्रकारता । यथा जलांशस्यामृतसमूहस्य सूत्रादेश्च । यथा पृथिव्यंशस्य मेरोर्विष्ठादेश्च अभिमानि-देवतापिच्चयैतत् ॥ ४६ ॥

एते स्वांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् । अतःपरं

अनुज्ञापरिहारौ देह सम्बन्धाज्ज्योतिरादि-
वत् ॥ ४८ ॥

पदव्यक्तं अव्यूढ़गुणवृंहितम्। अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः॥ स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते॥ अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथास्थितिः। तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित्। विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित् सादृश्यमात्रयुगिति वाराहे। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य इति च ॥ ४७ ॥

परानुज्ञया प्रकृतिः परतो बन्धनिवृत्तिश्च जीवस्य प्रतीयत्वेऽपि देहसम्बन्धात्। य आत्मान मनुरोपमयति तमेवं विद्वानमृत इह भवतीत्यादि। न तु परस्य वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धोऽहं मत्स्यः कूर्मः वराहो नृसिंहो वामनो रामः रामः कृष्णो बुद्धः कल्किरहं शतधाहं सहस्रधाह ममितोऽहमनन्तो नैवैते जायन्ते नैतेषामज्ञानबन्धो न मुक्तिः सर्व एव ह्येते पूर्णा अजरा अमृताः परमाः परानन्द इति चतुर्वेदशिखायाम्। युज्यते च ज्योतिरादिवत् यथादित्यो वियद्गतस्तत्प्रकाशश्चैकप्रकारः। शुक्लं कृष्णं कनीनिकेति तदंशस्याप्यक्ष्णो देहसम्बन्धान्न तादृशी शक्तिः तदनुग्राह्यत्वं तेनैवावृत्तिपरिहारश्च। यथा वाह्यामृतजलस्य भूतलस्थामृतसमुद्रस्य चैकत्वं तदंशस्यापि क्षेत्रगस्तदनुग्राह्यत्वं तेनैव विरोधनिवृत्तिश्च। मोक्षधर्मे च—यत् किञ्चिदिह लोकेऽस्मिन् देहबद्धं विशांपते। सर्वं पञ्चभिराविष्टं भूतैरो ..रबुद्धिजैः। ईश्वरो हि महद्भूतं प्रभुर्नारा

असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

आभास एव च ॥ ५० ॥

यणो विराट्। भूतान्तरात्मा विज्ञेयः स गुणी निर्गुणोऽपि च। भूतप्रलयमव्यक्तं शुश्रूषु नृपसत्तमेति। वाराहे च—अंशाश्च देहयोग्यत्वाद् जीवा बन्धादिसंयुताः। अनुग्राह्या-श्चेश्वरेण न तु मत्स्यादिको हरिः। अदेहबन्धयोग्यत्वा-द्यथा सूर्यप्रभाच्चिणी। यथा मृतसमुद्रस्य श्लेषादेश्च विरू-पता। अनुग्राह्यत्वमन्यस्य तेनैवावृत्ति शोधनमिति ॥४८॥ अपूर्णशक्तित्वाच्च जीवस्य न मत्स्यादिसाम्यम्। तथा च चतुर्वेदशिखायां—तस्य ह वा एतस्य परमस्य त्रीणि रूपाणि कृष्णो रामः कपिल इति तस्य ह वा एतस्य पर-मस्य पञ्च रूपाणि दश रूपाणि तानि ह वा एतानि सर्वाणि पूर्णानि सर्वाण्यमितानि सर्वाण्यसंमितान्यथा वराः सर्व एवा पूर्णाः सर्व एव बद्ध्यन्ते चाथ मुच्यन्ते च केच-नेति ॥ ४९ ॥

रूपं रूपं प्रतिरूपो बभूवेति प्रतिबिम्बत्वाच्च न साम्यम्। वाराहे च। द्विरूपावंशकौ तस्य परमस्य हरेर्विभोः। प्रतिबिम्बांशकश्चाथ स्वरूपांशक एव च। प्रतिबिम्बांशका जीवाः प्रादुर्भावा परे स्मृताः। प्रतिबिम्बोऽस्वल्पसाम्यं स्वरूपाणीतराणि तु इति। सोपाधिरनुपाधिश्च प्रतिबिम्बो द्विधेयते। जीव ईशस्यानुपाधि रिन्द्रचापो यथा रवेरिति पैङ्गिश्रुतिः। यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततमिति च श्रुतिः ॥ ५० ॥

अदृष्टानियमात् ॥५१ ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

इति श्रीमत् कृष्णद्वैपायनकृतब्रह्मसूत्र-
भाष्ये श्रीमदानन्दतीर्थभगवत्पाद
विरचिते द्वितीयाध्यायस्य
तृतीय पादः समाप्तः ।

---

अस्य प्रतिबिम्बानां मिथो वैचित्र्यकारणमाह – अनादिविद्याकर्म्मादिवैचित्र्याद्वैचित्र्यम् ॥ ५१ ॥

इच्छाद्वेषसुखदुःखादिवैचित्र्याच्चादृष्टादेव । च शब्देन प्रतिक्षणं वैचित्र्यम् ॥ ५२ ॥

न स्वर्गभूम्यादिप्रदेश वैचित्र्याद् वैचित्र्यं तत्प्राप्तिरप्यदृष्टापेक्षत्वादेकदेशस्थिता नामैव वैचित्र्यदर्शनाच्च ॥ ५३ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदा-
नन्दतीर्थभगवत्पूज्यपादविरचिते
द्वितीयाध्यायस्य तृतीय-
पादः समाप्तः ।

---

तथा प्राणाः ॥ १ ॥

गौण्यसम्भवात् ॥ २ ॥

प्रतिज्ञानुपरोधाच्च ॥ ३ ॥

युक्तिसहितश्रुतिविरोधं श्रुतीनामपाकरोत्यनेन पादेन। प्राणा एवेदमग्र आसंस्तेभ्यो भूतानि जज्ञिरे । तेभ्योऽण्डम- ण्डस्यान्तस्त्विमे लोकाः । अथ प्राणा एवानादयः प्राणा नित्या इति काषायणश्रुतौ प्राणानामनुत्पत्तिः श्रूयते । उपादान- नोपादानं हीन्द्रियाणां सतोऽनुत्पत्तिरिष्यते । इति भविष्यत्पुराणे कृता सृष्टिः सर्वलोकेषु चाहृता । इति भविष्यत्पुराणे एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति चात उच्यते तथा कालादयः परमात्मन उत्पद्यन्ते तथा प्राणा अपि ॥ १ ॥

अनादिश्रुतिर्गौणानादित्वापेक्षया मुख्यासम्भवात् । तेषां नित्यान्येतानि सौक्ष्म्येण हीन्द्रियाणि तु सर्वशः । कस्य भूतैरुपचयः सृष्टिकाले विधीयते परेण साम्यं सम्प्राप्ते स्याम्मुख्यनित्यतेति हि भविष्यपुराणे ॥ २ ॥

इदं सर्वमसृजतेति ॥ ३ ॥

द्विधा हैवेन्द्रियाणि नित्यानि चानित्यानि च तत्र नित्यं मनोऽनादित्वान्न ह्यमनाः पुमांस्तिष्ठत्य नित्यान्य- न्यानीति गौपवनश्रुतौ मनसोऽनुत्पत्तिः सयुक्तिका श्रूयते अत आह मनः सर्वेन्द्रियाणि चेति पूर्वोक्तत्वान्नानुत्- पत्तिर्मनसो युज्यते पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः ।

तत्प्राक्श्रुतेश्च ॥ ४ ॥

तत्पूर्वकत्वाद्वाचः ॥ ५ ॥

सप्तगतेर्विशेषितत्वाच्च ॥ ६ ॥

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ७ ॥

तदनुत्पत्तिवचनमल्पोपचयकारणादिति वायुप्रोक्तवचनं च शब्देन गृहीतम् ॥ ४ ॥

नित्यया नित्यया स्तौमि परमात्मानमच्युतमिति वाग्वाव नित्या न ह्येषोत्पद्यते अस्यां हि श्रुतिरवतिष्ठते इति सयुक्तिकं पौष्यायणश्रुतौ वाचोऽनुत्पत्तिरुच्यते अतोऽब्रवीत् तस्मान्मन एव पूर्वरूपं वागुत्तररूपमिति मनःपूर्वकत्वा द्वाचो नानुत्पत्तिः । वगिन्द्रियस्य नित्यत्वं श्रुतिसन्निधियोग्यता । उत्पत्तिर्मनसो यस्मान्न नित्यत्वं कुतश्चनेति वायुप्रोक्तिः ॥ ५ ॥

सप्त प्राणाः प्रभवन्ति तस्मादिति श्रुतिः सप्तैव मारुताः बाह्ये प्राणाः सप्त तथात्मनि । अधिदैवे तथाध्यात्मे संख्यासाम्यविदो विदुरिति च स्कान्दे । द्वादश वा एते प्राणा द्वादशमासा द्वादशादित्या द्वादशराशयो द्वादशरुद्रा इति कौण्डिन्यश्रुतौ द्वादशप्राणा दृश्यन्ते । अतो वर्ति-ज्ञानेन्द्रियापेक्षया सप्तत्वं गुहाशया निहिताः सप्त सप्तेति विशेषणात् सप्त प्राणाश्च कर्म्मणः । एवं प्राणा द्वादशकं शरीरे नित्यसंस्थितमिति भविष्यत्पूर्ववचनं च शब्दात् ॥ ६ ॥

हस्तादीनां कर्म्मविषयत्वान्न तत्र पाठः संसारस्थिति-

अणवश्च ॥ ८ ॥

श्रेष्ठश्च ॥ ९ ॥

न वायुक्रिये पृथगुपदेशात् ॥ १० ॥

हेतुत्वात् स्थितं कर्म्मविदो विदुः तस्मादुन्नतिहेतुत्वात् ज्ञानं गतिरिहोच्यत इति वायुप्रोक्तेः ॥ ७ ॥

दिवीव चक्षुराततमिति व्याप्तिः प्रतीयते दूरश्रवणदर्श-नादियुक्तिश्च। अणुभिः पश्यत्यणुभिः शृणोति प्राणएवा-णवः प्राणैर्ह्येतद्भवतीति कौण्डिन्यश्रुतिः। अतोवक्ति – तद्यथा ह्याणुनश्चक्षुषः प्रकाशो व्यातत एव मेवास्य पुरुषस्य प्रकाशोव्याततोऽणुर्ह्येवैष भवतीति शाण्डिल्य-श्रुतिः ॥ ८ ॥

नैष प्राण उदेति नास्तमेति एकक एव मध्ये स्थाता अथैनमाहुर्मध्यम इति मुख्यप्राणस्यानुत्पत्तिः श्रूयते। यत् प्राप्तिर्यत् परित्याग उत्पत्तिर्मरणन्तथा। तस्योत्पत्तिर्मृति-श्चैव कथं प्राणस्य युज्यते इति च युक्तिर्वायूक्तेः। आत्मन एष प्राणो जायत इति च। अत आह। सौक्ष्म्येण ह वा एष पुरुषोऽवतिष्ठते स्थूलत्वेनोदेति सूक्ष्मश्चाथो स्थूलश्च प्रकृतितः सूक्ष्मोऽन्यतः स्थूलोऽथैन माहुः। सादिरनादि-रितीति गौपवनश्रुतेः ॥ ९ ॥

चेष्टायां वाह्यवायौ च मुख्यप्राणे च गीयते प्राणशब्द-स्त्रिषु ह्येषु मुख्ये मुख्यः प्रकीर्त्तित इति वायुक्रिययोरपि व्यपदेशादुत्पत्तिश्रुतिस्तयोर्न स्यात्। स प्राणमसृजत खं वायुर्ज्योतिरापस्तपो मन्त्राः कर्म्म चेति पृथगुपदेशात्।

चक्षुरादिवत्तु तत्सह शिष्ट्यादिभ्यः ॥ ११ ॥
अकरणत्वाच्च न दोष स्तथाहि दर्शयति ॥१२॥

भूतानि चेष्टा मन्त्राय मुख्यप्राणादिदं जगत्। मुख्यप्राणः परस्मा च नपरः कारणान्वित इति वायुप्रोक्तेः ॥ १० ॥

प्राणादिदमाविरासीत् प्राणोधत्ते प्राणोलयमभ्युपैति न प्राणः किञ्चिदाश्रित इत्यग्निवेश्मश्रुतौ। यदाश्रयादस्य चेष्टा सोऽन्यं कथमुपाश्रयेत्। यथा प्राणस्तथा राजा सर्वस्यैकाश्रयी भवेदिति च युक्तिर्भारते। प्राणस्यैतद्वशे सर्वं प्राणः परवशे स्थितः। न परः किञ्चिदाश्रित्य वर्त्तते परमो यत इति पैङ्गिश्रुतिः। अत आह चक्षुरादिवन्मुख्यप्राणोऽपि परमात्मवश एव। सर्वं ह्येवैतत् परमेव तिष्ठते प्राणश्च प्राणिनश्च सर्वं कएवैतान्चयत्युन्नयति वशीकरोति इति गौपवनश्रुतौ चक्षुरादिभिः सह तद्वशत्वेनैव शासनात्। सर्वकर्त्तापि सन् प्राणः परमाधारतः स्थितः। कथमेवान्यथा स स्याद् यतो नैवेश्वरद्वयम्। अवान्तरेश्वरत्वेन तस्येश्वरवचो भवेत्। अतो मध्यमतामाहुस्तस्य वेदेषु वेदिनः। अनन्येश्वरता प्राणे तदन्येश्वरवर्ज्जनात्। यतो विशेषवाक्येन हीयते समता वचः। नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति द्रष्ट इत्यादिवचनयुक्तय श्चादिशब्देनोक्ताः ॥ ११ ॥

इतरेषां प्राणानां करणत्वान्मुख्यस्याकरणत्वाच्च तस्मात्तेभ्यः प्रवृत्तमलं युज्यते माण्डव्यश्रुतिश्च। तानि ह वा

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १३ ॥

अणुश्च ॥ १४ ॥

एतानि सर्वाणि कारणानि अथ प्राण एवा कारणस्तस्मा-
न्मुख्यस्तस्मान्मुख्य इत्याचक्ष्यत इति ॥ १२ ॥

सर्वे वा एते मुख्यदासा । प्राणोऽपानो व्यान उदानः
समान इति । अथ प्राणो वाव सम्राडिति कौण्डिन्य-
श्रुतिः । प्राणापानादयः सर्वे मुख्यदासा यतोऽनिशम् ।
अतस्तदाज्ञया नित्यं स्वानि कर्माणि कुर्वत इति युक्ति-
र्वायुप्रोक्तिः । मुख्यस्यैव स्वरूपाणि प्राणाद्याः पञ्चवायवः ।
स एव प्राणिनां देहे पञ्चधा वर्त्ततेऽनिशमिति गौपवन-
श्रुतिः । अतोवक्ति – अथ पञ्चवृत्त्यै तत् प्रवर्त्तते प्राणो वा
पञ्चवृत्तिः प्राणोऽपानोव्यानः उदानः समान इति तेभ्यो वा
एतेभ्यः पञ्च दासाः प्रजायन्ते प्राणाद्वाव प्राणोऽपानादपानो
व्याना द्व्यान उदानादुदानः समानादेव समानो यथाह
वै मनः पञ्चधा व्यपदिश्यते मनो बुद्धिरहङ्कार श्चित्तं चेत-
नेति तेभ्यो वा एतेभ्यः पञ्च दासाः प्रजायन्ते मनसो वाव
मनोबुद्धेर्बुद्धिरहङ्कारादहङ्कारश्चित्ताच्चित्तं चेतनाया एव
चेतनैवमितीति ॥ १३ ॥

प्राण एवाधस्तात् प्राण उपरिष्टात् प्राणो मध्यतः प्राणः
सर्वतः प्राण एवेदं सर्वमिति प्राणस्य व्याप्तिः प्रतीयते। यतः
सर्वं जगद्व्याप्य तिष्ठति प्राण एव तु। अतो धृतं जगत्
सर्वमन्यथा केन धार्य्यत इति युक्तं वायुप्रोक्तिः। अणुनैतत्
सृज्यतेऽणुनैतद्धार्य्यतेऽणौ लयमप्युपैति वा प्राणो अणुः प्राणो

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥

प्राणवता शब्दात् ॥ १६ ॥

तस्य च नित्यत्वात् ॥ १७ ॥

ह्येतद्भवतीति सौत्रायणश्रुतिः। अत आह स वा एष प्राणोऽणुर्महान् नामान्तर्वाऽणुर्वहिर्महान् अणोर्वा ईशितव्येश ईश ह्यसौ सर्वस्येशितव्यस्य परस्येति कौण्डिन्यश्रुतिः ॥१४॥

करणत्वं प्राणानामुक्तं जीवस्य करणान्याहुः प्राणानि तांस्तु सर्वशः। यस्मात्तद्वशगा एते दृश्यन्ते सर्वदेहिषु इति सौत्रायणश्रुतौ स युक्तिकं जीवकरणत्वं प्रतीयते ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागिति तद्वैतैः कारयतीति च काषायणश्रुतौ अत आह यज्ज्योतिराद्यधिष्ठानं ब्रह्म तद्दैवैतैः करणैः प्रवर्त्तयति यः प्राणे तिष्ठन्नित्यादि तदामननात् ॥ १५ ॥

कथं जीवकरणत्वश्रुतिरित्यतो वक्ति—जीवेनैव करणैः कारयति परमात्मा अतो न विरोधः। एष ह्यनेनात्मना चक्षुषा दर्शयति श्रोत्रेण श्रावयति मनसा मानयति बुद्ध्या बोधयति तस्मादेतावाहुः स्मृतिरस्मृतिरितीति भाल्लवेयश्रुतिः। कारणैः कारणं ब्रह्मपुरुषापेक्षयाखिलम्। श्रोत्रादिभिः कारयति करणानीत्यतो विदुः। न जीवापेक्षया मुख्यं कारयेत् परमेश्वरः। केवलात्मेच्छया तस्मान्मुख्यत्वं तस्य निश्चितमिति वाराहे ॥ १६ ॥

अनादिनित्यत्वाच्च जीवकरणसम्बन्धस्य युज्यते तत्

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१८॥

भेदश्रुतेः ॥ १९ ॥

करणत्वमिति श्रुतिः। यथावियोगिनि करणैर्वाव न वियुज्यते देहेनैव वियुज्यते इत्येतद्वाव करणानां करणत्वं यद्वाव न वियुज्यत इति गौपवनश्रुतिः। चशब्दः करणसम्बन्धग्राही ॥ १७ ॥

अथेन्द्रियाणि प्राणा वा इन्द्रियाणि प्राणा ह्येदं द्रवन्तीति सयुक्तिका सौत्रायणश्रुतिः। सामान्येन प्राणानामिन्द्रियत्वं वक्ति द्वादशैवेन्द्रियाण्याहुर्मनो बुद्धी तु द्वादश इति च काषायणश्रुतिः। अतः कस्येन्द्रियत्वं निवार्य्यत इत्यतो वक्ति मुख्यप्राणं ऋते त एवेन्द्रियाणि द्वादशैवेन्द्रियाण्याहुः प्राणो मुख्यस्त्वनिन्द्रियं द्रववतां होन्द्रियाणां तु नियन्ता प्राण एकराडिति पौत्रायणश्रुतिः। श्रोत्रादीनि पञ्चैव तथा वागादिपञ्चकम्। मनोबुद्धिसहायानि द्वादशैवेन्द्रियाणि तु। विषयद्रवणात्तेषामिन्द्रियत्व मुदाहृतम्। तेषां नियामकः प्राणः स्थित एवा खिलप्रभुरिति बृहत्संहितायाम् ॥ १८ ॥

स्थित एव होदं मुख्यप्राणः करोति कारयति चलति चालयति धत्ते धारयति प्रभुं वा एनमाहुरथेन्द्रियाणि तु स्थितानि न कुर्वन्ति न कारयन्ति न चलन्ति न चालयन्ति न दधते न धापयन्ति तानि एतान्यचलानि तस्मादाहुरिन्द्रियाणि कारणानीति पौत्रायणश्रुतेः ॥ १९ ॥

**वैलक्षण्याच्च ॥ २० ॥**

**संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत् कुर्वत उपदेशात् ॥ २१ ॥**

**मांसादिभौमं यथाशब्दमितरयोश्च ॥ २२ ॥**

पुरुषापेक्षया प्रवृत्तिरिन्द्रियाणां दृश्यते न मुख्यस्य प्राणास्तय एवैतस्मिन् पुरे जाग्रतीति च श्रुतिः ॥ २० ॥

विरञ्चो वा इदं विरेचयति विदधाति ब्रह्मा वै विरञ्च एतस्माद्धीमे रूपनामनीति गौपवनश्रुतिः। यस्माद्विरेचयेत् सर्वं विरञ्चस्तेन भण्यते। एकैव कर्त्ता जगतो ब्रह्मैव च चतुर्मुख इति युक्तिर्ब्राह्मे। अथ कस्मादुच्यते परम इति परा ह्येते नामरूपे व्याक्रियेते तस्मादेनमाहुः परम इति अथ कस्मादुच्यते ब्रह्मेति बृहत्वाद्बृंहणत्वाच्चेत्यग्निवेश्यश्रुतिः। अत आह—नामरूपक्लृप्तिः परमादेव सर्वाणि विचिन्त्य धीरो नामानि हृत्वाभिवदन्यदास्ते इति श्रुतिः। त्रिवृत् कुर्वत इति हेतुगर्भः त्रिवृत् करणापेक्षत्वान्नामरूपयोः सर्वनाम्नां च रूपाणां व्यवहारेषु केशवः। एक एव यतः स्रष्टा ब्रह्माद्यास्तदवान्तरा इति पाद्मे। त्रिवृत् क्रियायतो विष्णो रूपञ्च तदपेक्षया। रूपापेक्षं तथा नाम व्यवहारस्तदात्मकः। अतो नाम्नश्च रूपस्य व्यवहारस्य वैकराट्। हरिरेव यतः कर्त्ता पितातो भगवान् प्रभुरिति च ब्रह्माण्डे ॥ २१ ॥

अन्नाो हीदमुत्पद्यते आपो वाव मांसमस्थि च भव-

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥

इति श्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
श्रीमदानन्दतीर्थभगवत्पादविर-
चिते द्वितीयाध्यायस्य चतुर्थः
पादः समाप्तः ।

न्यापः शरीरमाप एवेदं सर्वमिति कौण्डिन्यश्रुतिः । अस्मयं तु यतो मांसमतस्तृप्तिश्च मांसत इति च मारुते । पृथिवीशरीरमध्येति आकाश आत्मेति च अतो ब्रवीति यत् कठिनं सा पृथिवी यद् द्रवं तदापो यदुष्णं तत्तेज इति श्रुतेर्मांसाद्येव भौमं न सर्वशरीरं अतैजसीश्च कार्यं यथा-शब्दसङ्गीकर्त्तव्यम् । यद्वा वायौ विमिश्रं मिश्राङ्गितङ्-वतीति मिश्राणि हि भूतानि तस्मादेवैव माचक्षते च भूतानीति च काषायणश्रुतिः । पञ्चभूतात्मकं सर्वं तद-प्येक विवक्षया । एकभूतात्मकेन व्यवहारस्तु वैदिकः । भौममित्येव काठिन्याच्छैत्यादौदकमित्यपि । तैजिष्ठाद्वा तैजसश्च यथास्थां वचनं श्रुतिरिति वायुप्रोक्तेः ॥ २२ ॥

कथन्तर्हि विशेषवचनमित्यत आह भूतानां विशेष-संयोगादेव विशेषव्यवहारः । पार्थिवानां शरीराणामर्द्धेन पृथिवी स्मृता । इतरेऽर्द्धतिभागिन्य आपस्तेजस्तु भागतः । इति सामान्यतो ज्ञेयो भेदश्च प्रतिपूरुषम् । स्वर्गस्थानां शरीराणामर्द्धं तेज उदाहृतमिति च बृहत्संहितायाम् ।

## अथ तृतीयोऽध्यायः।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

सर्वाध्यायार्थावधारणार्थोऽध्यायान्ते द्विरुक्तिः। गारुडे च। अध्यायान्ते द्विरुक्तिः स्याद् दैवे वा वैदिकेऽपि वा। विचारो यत्र सज्येत पूर्वोक्तस्यावधारणे। अनुक्तानां प्रमाणानां स्वीकारस्य कृतो भवेत्। विनिन्द्या चेतरान् मार्गान् संपूर्णफलता तथेति ॥ २३ ॥

इति श्रीमत् कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादविरचिते द्वितीयाध्यायस्य चतुर्थः पादः समाप्तः।

—०—

साधनविचारोऽयमध्यायः। वैराग्यार्थं गत्यादिनिरूपणप्रथमपादे भूतबन्धो हि बन्धः। भूतबन्धस्तु संसारी मुक्तिस्तेभ्यो विमोचनमिति च वाराहे। तत्र मरणे भवति भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम्। भूतानां संप्रयोगस्तु जनिरित्येव पण्डितैरिति महाभारते। अतः किं साधनैरित्यत आह शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छति वेत्ययथा पञ्चम्यामाहुता वापः पुरुषवचसो भवन्ति इति तु पञ्चम्यामाहुता वापः पुरुष वचसो भवन्तीति प्रश्नपरिहाराभ्याम् ॥ १ ॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

प्राणगतेश्च ॥ ३ ॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

अपशब्द आत्मात्मकत्वाद् युज्यते। भूयस्त्वाच्चापां तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा इति च भागवते ॥ २ ॥

यत्र वाव भूतानि तत्र करणानि नित्यानि ह वाव एतानि भूतानि करणानि च नैतानि कदाचिद्वियुज्यन्ते न च विनीयन्त इति च भाल्लवेयश्रुतेः। प्रमाणगतेर्भूतान्यपि सन्तीति सिद्धम् ॥ ३ ॥

यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वाचं प्राण इत्यादि श्रुतेर्न प्राणानां जीवेन सह गतिरिति चेत्—न, भागतोऽग्न्यादिप्राप्तेः। पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु अधि दैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम्। पुनः शरीरसंप्राप्तौ तमेवानुविशन्ति चेति ब्राह्मे। ब्रह्माण्डे च। भागतो मृतिकाले जहत्येनं प्राणा भूतानि पञ्च च। भागतस्त्वेन मनुगच्छन्ति सर्वश इति ॥ ४ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वतीति प्रथमाग्नौ श्रूयते न भूतानि जुह्वतीति अतो नेति चेत्—न, ता एव प्रसुता आपः श्रद्धारूपेण ह्यन्त इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्युपसंहारोपपत्तेः ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥
भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥
कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां ॥ ८ ॥

अग्न्यादिगतिः प्रत्यक्षतः श्रूयतेऽतः प्रत्यक्षाश्रवणान्न युक्तमिति चेन्न अथैतमं यजमानं किं न जहाति भूतान्येव भूतैरवगच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरतीति कोठरव्य श्रुतौ प्रतीयते ॥ ६ ॥

अपामसोमममृता अभूमेत्यादिश्रुतिविरोध इत्यतो वक्ति। भागतस्तदमृतत्वं न्यान्यः पन्था अयनाय विद्यते इति श्रुतेरात्मविद एव हि मुख्यं वा शब्दात् पारम्पर्येणात्मविदपेक्षया वा। तथा हि श्रुतिः — स एनमविदितो न भुनक्ति यथा वेदो वा ननूक्तोऽन्यद्वा कर्म कृतम्। यदि ह वा अथ नैवं विन्महत्पुण्यं कर्म करुते तद्ध्यस्मात्ततः क्षीयत एव। आत्मानमेव लोकमुपासीत स यथात्मानमेव लोकमुपास्ते न ह्यस्य कर्म क्षीयते तस्माद्ध्येवात्मनो यद्यत् कर्म क्रियते तत्तत् सृजतेऽमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः कर्मणा ज्ञानमातनोति ज्ञानेनामृतो भवति अथामृतानि कर्माणि यत एनममृतत्वं नयन्तीति च ॥ ७ ॥

कृतस्य कर्मणो भोगे न क्षयान्मुक्तिरित्यत आह ततः शेषेणेमं लोकमायाति पुनः कर्म करुते पुनर्गच्छति पुनरागच्छतीति श्रुतेः। भुक्तशेषानुशयवानिमां प्राप्य भुवं

यथेतमनेवं च ॥ ९ ॥

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णा॰

र्जिनिः ॥ १० ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ११ ॥

पुनः। कर्म कृत्वा पुनर्गच्छेत् पुनरायाति नित्यशः। आचतुर्दशमादर्वात् कर्माणि नियमेन तु। दशावराणां देहानां कारणानि करोत्ययम्। अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यतीत्यादि स्मृतेश्च ॥ ८ ॥

शेषवानेवायाति यथैतमेव गच्छति यथैत मा गच्छति स भुंक्ते स कर्म कुरुते स परिवर्त्तत इति गतिप्रकारेणा-गतिः प्रतीयते। अतो ब्रूते धूमादभ्रमभ्रादाकाशमाका-शाच्चन्द्रलोकं यथेतमाकाशमाकाशाद्वायुर्वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति इति काषायणश्रुतेः यथा गतमन्यथा च ॥ ९ ॥

तद् य इह रमणीयचरणो रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयामिति श्रुतेश्चरणफलमेव गमनागमनं न यज्ञादिकृतम्। आचार इति संप्रोक्तकर्माङ्गत्वेन शुद्धिदः। अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतमिति चेन्न यज्ञाद्युपलक्षणार्थाचरणादिश्रुतिरिति कार्ष्णाजिनिर्म-न्यते ॥ १० ॥

तर्हि रमणीयाः कपूया इत्येव स्याच्चरणशब्दस्यानर्थक्य

सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥

अनिष्टादिकारिणामपि च श्रुतम् ॥ १३ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गति-
दर्शनात् ॥ १४ ॥

स्मरन्ति च ॥ १५ ॥

मिति चेन्न। यज्ञाद्युपलक्षणार्था चरणादिरिति चरणा-
पेक्षत्वाद्रमणीयत्वादेस्तद्यज्ञापदार्थत्वेनोपपत्तेः ॥ ११ ॥

धर्म्मं चरत माधर्म्म मित्यादि प्रयोगात् सुकृतदुष्कृत एव चरणा शब्दोक्ते इति बादरिर्मन्यते। तुशब्दात् स्वसिद्धान्तोऽपि स एवेति सूचयति। तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे इति च नाममहोदधौ ॥ १२ ॥

पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह। तद्य इह शुभकृतो ये वा अशुभकृतस्ते शुभमनुभूयावर्त्तन्ते पुनः कर्म्म कुर्वन्ति पुनर्गच्छन्तीति भाल्लवेयश्रुतौ ॥ १३ ॥

संयमनमनुभय' केषाञ्चिदारोहः केषाञ्चिदवरोहः। तुशब्दोऽवधारणे सर्वे वा एते शुभकृतः संयमन' प्रपतन्ति। तत्र ह ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तद्वमन्तारः शठा मुर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैव ते उत्तिष्ठन्तेऽपि कर्हिचित् ये ध्रुवा एतदित्याहुः। अथ येऽन्ये ब्रह्मद्विषस्तेनाः सुरापास्ते वै तदनुभूयेमं लोकमनुव्रजन्तीति कौठरव्यश्रुतेः ॥ १४ ॥

गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः। तत्र भुक्त्वा

अपि च सप्त ॥ १६ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १७ ॥

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १८ ॥

यतन्त्येव ये द्विषन्ति जनार्द्दनम् । महातमसि मग्नानां न तेषामुत्थितिः क्वचित् । इतरेषान्तु पापानां व्युत्थानं विद्यतेऽपि च सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् । इति सर्वत्र नियमः पञ्चकष्टे तु तत् सदेत्यादि ॥ १५ ॥

रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा । कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि च । तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ संप्रकीर्त्तितौ । इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् । एतानि क्रमशो गत्वैवारोहोऽथावरोहणमिति च भारते ॥ १६ ॥

ईश्वरस्य नरकायुक्तिः सर्वं विसृजति सर्वं विलापयति सर्वं रमयति सर्वं प्रवर्त्तयत्यन्तरस्मिन्निविष्ट इति कौषारवश्रुतिविरोधः इत्यतो वक्ति । च शब्दाद्दुःखानुभवेन स स्वर्गे स भूमौ स नरकेसोऽन्धे तमसि प्रवृत्तिकरैक एवानुविष्टा नासौ दुःखभोगीश्वरःप्रभुत्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग् य एवं वेदेति पौत्रायणश्रुतेरविरोधः । नरकेऽपि दुःखभोगसम्बन्धो नासौ दुःखभुगुच्यते । नीचोच्चतेव दुःखादेर्भोग इत्यभिधीयते । नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः इति भागवततन्त्रे ॥ १७ ॥

अथैतयोः पथोर्नैकतरेण च तानीमानि क्षुद्रमिश्राण्य-

न तृतीये तथोपलब्धेः ॥ १८ ॥

स्मर्य्यतेऽपि च लोके ॥ २० ॥

दर्शनाच्च ॥ २१ ॥

सकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानमिति गति स्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह। विद्याकर्म्मापेच्चयैवैतद्वचनं तयोरपि प्रकृतत्वात् विद्यापथः कर्म्मपथो द्वौ पन्थानौ प्रकीर्त्तितौ। तद्वर्जित स्त्रिधा याति तिर्य्यग् वा नरकं तम इति च भागवते ॥१८॥

यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते। अपि नीच गतौ किञ्चित् किमु मानुषदेहिष इति वचनान्महातमः स्यपि सुखप्राप्तिरित्यत आह। अथाविद्वान् कर्म्मा वाग् गच्छति त्रिधा ह वार्वाग् गतिस्तिर्य्यग् यातनातम इति है वाव सुखानुवृत्ते न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवतीति श्रुतेर्न तृतीयायां गतौ सुखम् ॥ १९ ॥

तिर्य्यक्षु नरके चैव सुखलेशो विधीयते। नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चनेति भविष्यत् पर्वणि लोक सिद्धञ्चैतत्। च शब्दाल्लोकसिद्धिरपि स्मार्त्त्याह। अतिप्रिये यथा राजा न दुःखं सहते क्वचित्। अत्यप्रिये सुखमपि तथैव परमेश्वरः – इति च ब्राह्मे ॥ २० ॥

नारायणप्रसादेन समिद्धज्ञानचक्षुषा। अत्यन्तदुःख संलीनान्निःशेषसुखवर्जितान्। नित्यमेव तथा भूतान् विमिश्रांश्च गणान् बहून्। निरस्ताशेषदुःखांश्च नित्यान-

तृतीयशब्दावरोधः संशोकजस्य ॥ २२ ॥

स्वाभाव्यापत्तिरुपपत्तेः ॥ २३ ॥

नातिचिरेण विशेषात् ॥ २४ ॥

द्वैकभागिनः। अपश्यद्विविधान् ब्रह्मा साक्षादेव चतुर्मुख इति दर्शनवचनाच्च पाद्मे ॥ २१ ॥

तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारात् संशोकजमोहप्राप्तिः ॥ २२ ॥

महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाधरम्। श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत्। तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तमेति कौर्म्मे।

धूमो भूत्वाभ्रं भवतीत्याद्यन्यभावः श्रूयते स कथमिति अतो — ब्रवीति धूमादिषु प्रविष्टस्य तद्गतौ गतिः स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः। न ह्यन्यस्यान्यभावो युज्यते न च तत्पदप्राप्तिः। गारुडे च। धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव च। स्थितौ स्थितिप्रवेशश्च लघुत्वादिस्तथैव च। न ह्यन्यस्यान्यथाभावो न च तत् पदमिष्यते। विद्यागम्यं पदं यस्मान्न तत् प्राप्यं हि कर्म्मणा। एकदेशस्वभावेन वागभेदापि युज्यते। यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपीति ॥ २३ ॥

बहुस्थानगमनात् कल्पान्तमेवं स्यादित्यत आह — तद्य इह रमणीयचरणा अभ्यायत्ते रमणीयां योनिमापद्यन्त इति विशेषान्नातिचिरेण स्वर्गाल्लोकादवाक्प्राप्तो वत्सरात्

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २५ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २६ ॥

रेतः सिग्योगोऽथ ॥ २७ ॥

पूर्वमेव तु। मातुः शरीरमाप्नोति पर्य्यटनं यत्र तत्र च इति नारदीये ॥ २४ ॥

त इह व्रीहियवा औषधिवनस्पतयस्तिला मासा इति जायन्त इति श्रवणादनर्थफलत्वं यज्ञादेरिति। अतो वक्ति। अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः न तु भोगोऽस्य धूमो भूत्वाऽभ्रं भवतीत्यादिपूर्वोक्तिवत्। सोऽवाग्गतः स्थावरान् प्रविशत्यभोगेनैव व्रजन् स्थूलशरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्त इत्यभिलापात् कौठारवश्रुतौ स्वर्गादवाग्गता देही व्रीह्यादीतरदेहगः। अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालत इति वाराहे ॥ २५ ॥

हिंसारूपत्वात् पापस्यापि सम्भवाद् दुःखं च भवत्विति चेन्न शब्दविहितत्वात्। हिंसा त्ववैदिकी या तु तयानर्थो ध्रुवं भवेत्। वेदोक्तया हिंसया तु नैवानर्थः कथञ्चनेति वाराहे ॥ २६ ॥

स्वर्गादवाग्गतस्यापि मातुरेवोदरं व्रजेदिति वचनाद्य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुप्रविशतीति श्रुतिः कथमित्यत आह—ततो रेतसिचास्तवान् प्रविशत्यथ मातरमथ प्रसूयते स कर्म्म कुरुत इति कौठरव्यश्रुतेः। पितरमेव प्रथमतो विशति मातुः प्राप्तिः पश्चादपि भाव्यत्वात् ॥ २७ ॥

योनेः शरीरम् ॥ २८ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे तृतीयाध्यायस्य प्रथमः पादः।

---

देहं गर्भस्थितं क्वापि। प्रविशेत् स्वर्गतो गत इति वचनात् पश्चादेव प्रविशतीत्यत आह। पितुः शरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरं प्राप्नोति दिवः स्थास्नून् गच्छति, स्थास्नुभ्यः पितरं, पितुर्मातरं, मातुः शरीरं, शरीरेण जायत इति संमितं अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भेवावहिर्वेति पौष्यायणश्रुतिः। स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम्। पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम्। देहेन जायते जन्तुरिति सामान्यतो जनिः। विशेषजननं चापि प्रोच्यमानं निबोध मे। स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा। गर्भे वा वहिरेवाथ क्वचित् स्थानान्तरेषु चेति ब्राह्मे ॥ २८ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
श्रीमदानन्दतीर्थभगवत्पूज्यपाद-
विरचिते तृतीयाध्यायस्य प्रथमः पादः समाप्तः

---

## अथ द्वितीयः पादः ।

**सन्ध्ये सृष्टिराह हि ॥ १ ॥**

**निर्म्मातारञ्चैके पुत्रादयश्च ॥ २ ॥**

**मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३**

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४॥**

भक्तिरस्मिन् पादे उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः । न स्वप्नोऽपि तं विना प्रतीयते न तत्र रथारथयोगा न पन्थानो भवन्त्यथो रथान् रथयोगान् पथः सृजत इत्यादिश्रुतिः ॥ १ ॥

यत्र सुप्तेषु जागर्त्ति कामं कामं पुरुषो निर्म्मिमाण इति च । एतस्माद्देव पुत्रो जायत एतस्माद् भ्रातैतस्माद् भार्य्या यदेनं पुरुषमेव स्वप्ने नाभिहन्तीति पौष्पवनश्रुतिश्च ॥ २ ॥

केन साधनेन इत्यत आह — अनादिमनोगतांश्च संस्कारान् स्वेच्छामात्रेण दर्शयति, नाऽन्येन साधनेन सम्यगनभिव्यक्तस्वरूपत्वात् । ब्रह्माण्डे च । मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः । प्रदर्शयति जीवाय स स्वप्न इति गीयते । यदन्यथात्वं जाग्रत्त्वं सा भ्रान्तिस्तत्र तत् कृता । अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेदिति ॥ ३ ॥

साधनान्तराभावेऽपि भावाभावसूचकत्वेनेश्वरो दर्शयति — यदा कर्म्मसु काम्येषु स्त्रियं स्वप्नेऽभि पश्यति । समृद्धिं तत्र जानीयात् तस्मिन् स्वप्न निदर्शने इति श्रुतेः । हिरण्यदर्शनाच्च । यद्यपि ब्रह्मणो वृषादेवता वृषभोऽपि

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्ध-
विपर्ययौ ॥ ५ ॥

देहयोगाद्वा सोऽपि ॥ ६ ॥

तदभावो नाड़ीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

वा। स्वप्नस्याप्यथवा राजा तत्तथैव भविष्यतीत्याचक्षते च
स्वप्नविदो व्यासादयः ॥ ४ ॥

बन्धमोक्षप्रदत्वात् स एव स्वप्नतिरस्कर्त्ता। स्वप्नादि-
बुद्धिकर्त्ता च तिरस्कर्त्ता स एव तु। तदिच्छया यतो ह्यस्य
बन्धमोक्षौ प्रतिष्ठिताविति च कौर्म्मे ॥ ५ ॥

देहयोगेन वासौ जाग्रदपि तत एव जागरिते स्वाप-
यति स स्वप्ने स प्रभुस्वराषाट् स एकोबहुधा भवतीति
कौठरव्य देहयोगेन वासौ जाग्रदपि तत एव श्रुतेः ॥ ६ ॥

जाग्रत्स्वप्नाभावः सुषुप्तिर्नाड़ीस्थे परमात्मनि। आसु-
तदा नाड़ीषु सुप्तो भवति सता सौम्य तदा सम्पन्नो भव-
तीति श्रुतेः ॥ ७ ॥

यतस्तस्मिन् सुप्तिः एष एव सुप्तं प्रबोधयति एष तस्मा-
ज्जीव उत्तिष्ठत्येष प्रमातैष परम इति कौण्डिन्यश्रुतिः ॥ ८ ॥

न च केषाञ्चित् स्वप्नादिकर्त्ता न तु सर्वेषामिति एष ह्येव
साधु कर्म्म कारयतीति कर्म्मण्यवधारणात्। प्रदर्शकस्तु

मुग्धेऽर्द्धसम्पत्तिः परिशेषात् ॥ १० ॥

न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

सर्वेषां स्वप्नादेरेक एव तु। परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चनेत्यनुसारस्मृतेश्च। एष स्वप्नान् दर्शयति एष प्रबोधयति एष एव परात्मानन्द इति च श्रुतिः। आत्मानमेव लोकमुपासीतेति च विधिः ॥ ८ ॥

महावस्थायां परमेश्वरेऽर्द्धप्राप्तिर्जीवस्य हृदयस्थात् पराज्जीवाद्दूरस्थो जाग्रदेष्यति। समीपस्थस्तथा स्वप्नं स्वपित्यस्मिल्लयं व्रजन्। यत एवं त्रयोऽवस्था मोहस्तुपरिशेषतः। अर्द्धप्राप्तिरितिज्ञेयो दुःखमात्रप्रतिस्मृतेरिति च वाराहे। सोऽपि ततएवेतीति सिद्धम्। मूर्च्छाप्रबोधनञ्चैव यत एव प्रवर्त्तते। स ईशः परमो ज्ञेयः परमानन्दलक्षण इति च कौर्म्मे ॥ १० ॥

स्थानापेक्षया परमात्मनोऽपि भेदादनुग्राह्यनुग्राहकभाव इति अत आह। स्थानापेक्षयापि परमात्मनो न भिन्नं रूपम्। सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षत इति श्रुतिः। एकरूपः परो विष्णुः सर्वत्रापि न संशयः। ऐश्वर्य्याद्रूपमेकञ्च सूर्य्यवद्वहुधेयत इति मात्स्ये। प्रतिदृशमिव नैकधार्कमेकं समधिगतोऽस्मि विधूतभेदमोह इति च भागवते ॥ ११ ॥

कार्य्यकारणवद्धौ ता विष्येते विश्वतैजसौ। प्राज्ञः

अपि चैवमेके ॥ १३ ॥

अरूपवदेव हि तत् प्रधानत्वात् ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥

कारणवद्वस्तु द्वौ तत्तयोर्नसिद्ध्यत इति भेदवचनान्नेति चेन्न
एष ते आत्मान्तर्याम्यमृत अयमेव स योऽयमात्मेदममृतमिदं
ब्रह्मेदं सर्वं अयं वै हरयोऽयं वै दश च सहस्राणि बहुनि
चानन्तानि च तदेतद् ब्रह्मा पूर्वं परमनन्तरमबाह्य अय-
मात्मा ब्रह्म सर्वानुभूतिरनुशासनमिति प्रत्येकमभेदवच-
नात् ॥ १२ ॥

एवमभेदेनैव चशब्दादनन्तरूपत्वं चैकशाखिनः
पठन्ति। अमात्रोऽनन्तमात्र अद्वैतस्योपशमः शिवः।
ओंकारो विदितो येन स मुनिर्नेतरो जन इति। अभेदे-
ऽपि भेदव्यपदेशः स्थानभेदादैश्वर्य्ययोगाच्च युज्यते ब्रह्मतर्के·
च।बद्धो बन्धादिसाक्षित्वाच्छिन्नोऽच्छिन्नेषु संस्थितः। निर्दो-
षाद्वयरूपोऽपि कथ्यते परमेश्वर इति ॥ १३ ॥

रूपवत्वादनित्यत्वमिति। अतो वक्ति। प्रकृत्यादि-
प्रवर्त्तकत्वेन तदुत्तरसत्वान्नैव रूपवद् ब्रह्मादिशब्दादस्थूल-
मनण्वित्यादिश्रुतेश्च। भौतिकानीह रूपाणि भूतेभ्योऽसौ
परो यतः। अरूपवानतः प्रोक्तः क्व तदव्यक्ततः पर इति
मात्स्ये ॥ १४ ॥

यदा पश्यः पश्यते रुक्म वर्णं कर्त्तारमीशं पुरुषं ब्रह्म-
योनिं श्यामाच्छबलं प्रपद्ये सुवर्णज्योतिरित्यादिश्रुतीनाञ्च

आह च तन्मात्रम् ॥ १६ ॥

दर्शयति चाथो अपि स्मर्य्यते ॥ १७ ॥

अतएव चोपमा सूर्य्यकादिवत् ॥ १८ ॥

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

न वैयर्थ्यं विलक्षणरूपत्वात् यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः ॥ १५ ॥

वैलक्षण्यञ्चोच्यते रूपस्य विज्ञानानन्दमात्रत्वं एकात्मप्रत्ययसारमिति। आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषामिति चतुर्वेदशिखायाम् ॥ १६ ॥

दर्शयति चानन्दस्वरूपत्वं तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभातीति। शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम्। चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेरिति च मात्स्ये ॥ १७ ॥

यस्मादेवं परमेश्वर स्वरूपाणां मिथो न कश्चिद्भेदः अतः सादृश्याज्जीवस्यापि तथा स्यादिति न तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देनाभेदं दर्शयति। रूपं रूपं प्रतिरूपो बभूव। बहवः सूर्य्यकाश्चवत् सूर्य्यस्य सदृशा जले। एवमेवात्मका लोके परात्मसदृशा मता इत्यादि। अतएव भिन्नत्वतदधीनत्वतत्सादृश्यैरेव सूर्य्यकाद्युपमानोपाध्यधीनत्वादिना ॥ १८ ॥

नित्यसिद्धत्वात् सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्ति-

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् २०

दर्शनाच्च ॥ २१ ॥

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च

भूयः ॥ २२ ॥

ज्ञानादिना प्रयोजनमिति । अतो ब्रवीति । अम्बुवत्स्नेहेन ग्रहणं ज्ञानं भक्तिं विना न तत् साद्दश्यं सम्यग् विभज्यते यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वामिति हि श्रुतिः । स्नेहत्वाबुद्धिभक्तिस्तु स्नेहपूर्वाभिधीयते । तयैव व्यज्यते सम्यग् जीवरूपं सुखात्मकमिति ब्राह्मे ॥ १९ ॥

तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते ब्रह्मादीनामुत्तमानां भक्तत्वेऽन्तर्भावात् । एवं भक्तादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान् प्रति च सामञ्जस्यं भवति । साधनस्योत्तमत्वेन साध्यञ्चोत्तममाप्नुयुः । ब्रह्मादयः क्रमेणैव यथानन्द श्रुतौ स्तुता । इति च ब्राह्मे ॥ २० ॥

कुतः । अथात आनन्दस्य मीमांसा भवतीत्यारभ्य ब्रह्मपर्य्यन्तेषु सुखेषु पुनर्विशेषदर्शनात् । चशब्दात् स्मृतिः । यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे । तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदन इति ॥ २१ ॥

सृष्टिसंसारकर्तृत्वमेवास्य न पालकत्वं स्वतःसिद्धेरित्यत आह । उक्तसृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति । नैतावदेव नापरो ऽन्यद्रस्युभा सदावा

तदव्यक्तमाह हि ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

प्रकाशादिवच्चावैशेष्यम् ॥ २५ ॥

पृथिवी विभर्त्तीति चशब्दात् स्मृतिश्च। सृष्टिञ्च पालनञ्चैव संहारं नियमं तथा। एक एव करोतीशः सर्वस्य जगतो हरिरिति ब्रह्माण्डे ॥ २२ ॥

परमात्मा परोक्ष्यं च तत् प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते अव्यक्तमेव तद् ब्रह्म स्वतः अरूपमक्षरं ब्रह्म सदा व्यक्तञ्च निष्कलम्। यज् ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेदिति कौठरव्य श्रुतिः ॥ २३ ॥

आराधनेऽप्यव्यक्तमेव ज्ञानप्रत्यक्षेणेतरेषामितिसूक्ष्मत्वलिङ्गादनुमानेन न तमाराधयित्वापि कश्चिद् व्यक्तीकरिष्यति। नित्यो व्यक्तो यतो देवः परमात्मा सनातन इति चब्रह्मवैवर्त्ते ॥ २४ ॥

नत्वव्यक्तरूपेण तथैव तिष्ठति। व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते। यथाग्न्यादयस्तन्मात्रा रूपेण दृश्या अपि स्थूलरूपेण दृश्यन्त एवमिति चेन्न अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात्। नासौ सूक्ष्मो न स्थूलः पर एव स भविष्यति तस्मादाहुः परम इतीति माण्डव्यश्रुतिः स्थूलसूक्ष्मविशेषो एनं कश्चित् परमेश्वरे। सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्व जायत इति च गारुडे। अव्यक्तव्यक्तभावो च न क्वचित् परमेश्वरे। सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दन इति कौर्म्मे ॥ २५ ॥

प्रकाशश्च कर्मण्यभ्यासात् ॥ २६ ॥

अतोऽनन्तेन तथाहि लिङ्गम् ॥ २७ ॥

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २८ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २९ ॥

पूर्ववद्वा ॥ ३० ॥

तर्हि किं यत्नेनेत्यत आह विषयभूते तस्मिन्नेव श्रवणाद्यभावात् प्रकाशश्च भवति। आत्मा वारे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्य इति श्रुतेः ॥ २६ ॥

नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते उभयत्र प्रमाणाभावात् तत् प्रसादादेव प्रकाशो भवति। तस्याभिधानाद्द योजनात्तत्स्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरिति लिङ्गात्। युज्यते गतस्यानन्तशक्तित्वात् नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः। तमृते परमात्मानं कः पश्येतामृतं प्रभुमिति नारायणाध्यात्मे ॥ २७ ॥

स्वरूपेणानन्दादिना कथमानन्दत्वादिरित्यत उच्यते। आनन्दं ब्रह्मणो विद्वान्। अथैष एव परमात्मानन्द इत्युभयव्यपदेशात् अहिकुण्डलवदेव युज्यते यथाहिकुण्डली कुण्डलश्च तुशब्दात् केवलश्रुतिगम्यत्वं प्रदर्शयति ॥ २८ ॥

यथादित्यस्य प्रकाशत्वं प्रकाशित्वञ्च। एवं वा दृष्टान्तस्तेजोरूपत्वाद् ब्रह्मणः यथैकः कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति अतिसूक्ष्मत्वापेक्षयैव दृष्टान्तः स्थूलमतीनाञ्च प्रदर्शनार्थं अहि कुण्डल दृष्टान्तः। प्रकाशवत् कालवद्वा

प्रतिषेधाच्च ॥ ३१ ॥

परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३२॥

सामान्यात्तु ॥ ३३ ॥

बुद्धार्थः पादवत् ॥ ३४ ॥

यथाक्ते प्रयनादिकं ब्रह्मण्येवमुक्तानामानन्दोऽभिन्न एवतु इति नारायणाध्यात्मे आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत्। कालवद्वा यथा कालः स्वावच्छेदेन तां व्रजेदिति ब्राह्मे ॥ २९ ॥ ३० ॥

एकमेवाद्वितीयं नेह नानास्ति किञ्चनेति भेदस्य ॥३१॥

नचानन्दादित्वाल्लोकानन्दादिवत् एष सेतुर्विधृतिरयं एष आनन्दः परस्यैष नित्यो महिमा ब्राह्मणस्येति सेतुत्वम् उच्यते यतो वाचो निवर्त्तन्त इत्युन्मानत्वम्। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति सम्बन्धः। अन्यजज्ञानन्तु जीवानामन्यजज्ञानं परस्य च। नित्यानन्दाव्ययं पूर्णं परं ज्ञानं विधीयत इति भेदः। अतो लौकिकत्वात् परमेव ब्रह्मानन्दादिकम् ॥ ३२ ॥

दर्शनादेव चान्यानन्दादीनाम्। अदृष्टमव्यवहार्यं व्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणः तस्माद् ब्रह्मेत्याचक्षते इति कौण्डिण्य श्रुतिः ॥ ३३ ॥

अप्रसिद्धस्य कथमानन्द इत्यादि व्यपदेश इत्यतो बद्धिजीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते पादोऽस्य विश्वा भूतानीति तथा अलौकिकी-

स्थानविशेषात् प्रकाशादिवत् ॥ ३५ ॥

उपपत्तेश्च ॥ ३६ ॥

तथान्यप्रतिषेधात् ॥ ३७ ॥

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३८ ॥

ऽपि ज्ञानादिस्वच्छन्दैरेव भण्यते। ज्ञापनार्थाय लोकस्य

यथा राजैव देवराडिति पाद्मे ॥ ३४ ॥

परानन्दमात्रत्वं कथं ब्रह्माद्यानन्दादीनां विशेष इत्यत

उच्यते यथादित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्ब-

विशेषः एवं मानुषादेरपि ब्रह्मादिगुणवैशेष्यादानन्दः पर-

मस्य च। प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषत इति

च वाराहे ॥ ३५ ॥

ऐश्वर्यात् परमाद्विष्णोर्भक्त्यादीनामनादितः। ब्रह्मा-

दीनां सूपपन्ना ह्यानन्दादेर्विचित्रतेति पाद्मे ॥ ३६ ॥

ध्यानकाले यच्चित्तैर्दृश्यते तदेव ब्रह्म रूपम्। अतः

कथमव्यक्ततेत्यत आह यथा जीवानन्दादेरन्यद् ब्रह्म तथो-

पासा कृतादपि। यन्मनसा न मनुतेयेनाहुर्मनो मतम्।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति प्रतिषेधात्।

पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितं ब्रह्मैव प्रतिबिम्बो-

ऽयं यतस्तेषां फलप्रदम्। तदुपासनञ्च भवति प्रतिमोपा-

सनं यथा। दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम्। उपा-

सनात्व परोक्षं गमयेत्तत् प्रसादत इति च ब्रह्म तर्के ॥ ३७ ॥

देशकालान्तरेऽन्यतोऽपि दृष्ट्यादिक्रिया युक्तेत्यतो भूते।

फलमत उपपत्तेः ॥ ३९ ॥

श्रुतत्वाच्च ॥ ४० ॥

धर्मं जैमिनिरत एव ॥ ४१ ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४२ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे
तृतीयाध्यायस्य द्वितीयः
पादः समाप्तः ।

सर्वदेशकालवस्त्वादिष्वनेनैव सृष्ट्यादिकं प्रवर्त्तते । एष सर्वगत एष ईश्वर एषोऽचिन्त्य एष परम इति भाल्लवेय श्रुतिः। सर्वमेतस्मात् सर्वदा सर्ववस्तुषु । स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः । अतो मायामयं विष्णुं प्रवदन्ति सनातनमिति चतुर्वेदशाखायाम् । आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥ ३८ ॥

कर्मापेक्षत्वात् फलदानस्य तदेव ददातीति न भाव्यम् । कुतः अत एवेश्वरात् फलं भवति । न ह्यचेतनस्य स्वतःप्रवृत्तिर्युज्यते ॥ ३९ ॥

विज्ञानमानन्दं ब्रह्मरातिर्दातुः परायणमिति ॥ ४० ॥

यतः फलं तदेव कर्मेश्वराद्भवति । एष ह्येव साधु कर्म कारयतीति श्रुतेरिति जैमिनिः ॥ ४१ ॥

परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्त्तकं पर एव कर्म प्रवर्त्तकः पुण्येन पुण्यं लोकं नयति

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्॥ १ ॥

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिका-
राच्च ॥ ३ ॥

पापेन पापं लोकमिति हेतुव्यपदेशात् द्रव्यं कर्म्म च काल-
श्चेति ॥ ४२ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे तृतीयध्यायस्य
द्वितीयः पादः समाप्तः

---

उपासनास्मिन् पादे उच्यते सर्वं परिज्ञानं प्रथमत
उच्यते अन्तो निर्णयः। उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्व-
दर्शिभिरिति वचनात्। सर्ववेदनिर्णयोत्पाद्यं ज्ञानं ब्रह्म।
आत्मेत्येवोपासीतेत्यादि विधीनां तदुक्तयुक्तीनां चाविशिष्ट-
त्वात्॥ १ ॥

विज्ञानमानन्दं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि प्रति-
शाखं मुक्तिभेदान्नैकाधिकारिविषयाः। सर्वशाखा इति
चेत् न। एकस्यामपि शाखायामात्मेत्येवोपासीत खं
ब्रह्मेत्यादिभेददर्शनात् ॥ २ ॥

स्वाध्यायोऽध्येतव्य इति सामान्यविधेः। हिशब्दाद्वेदः
कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मनेति स्मृतः। एवं

सलिलवच्च तन्नियमः ॥ ४ ॥

दर्शयति च ॥ ५ ॥

उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥६॥

वेदोक्तमार्गेण कर्म कुर्वीत नित्यशः । आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः । सर्वकर्म हृतोयस्मादशक्ताः सर्वजन्तवः । शाखाभेदं कर्मभेदं व्यासस्तस्मादचीकृपत् । इति समाचारे सर्वेषामधिकाराच्च ॥ ३ ॥

यथा सर्वं सलिलं समुद्रं गच्छति एवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः । आग्नेये च यथा नदीनां सलिलं शश्वे सागरगं भवेत् । एवं सर्वाणि वाक्यानि युक्त्या ब्रह्मविदस्तय इति ॥ ४ ॥

सर्वैश्च वेदैः परमो हि देवो जिज्ञास्यासौ नान्यवेदैः प्रसिद्धेत् । तस्मादेनं सर्वं वेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुरिति चतुर्वेदशिखायाम् । सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् स पञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथेति ब्रह्मतर्के ॥ ५ ॥

सर्ववेदैः सर्वो नोपास्योऽशक्यत्वादित्यत आह । सर्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः । उपास्य एकः परतः परो यो वेदैश्च सर्वैः सहचेतिहासैः सपञ्चरात्रैः स पुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैरिति हि भाल्लवेय श्रुतिः । आग्नेये च । विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि । यथा कार्य्याणि सर्वैश्च सर्वाख्येवा

**अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ७॥**

**नवा प्रकरणभेदात् परोवरीयस्त्वादिवत्॥८॥**

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि॥ ६॥**

विशेषत: एवं सर्वगुणान् सर्वदोषाभावांश्च यतत:। योजयित्वैव भगवानुपास्यो नान्यथा क्वचिदिति समानविषयेपूर्णत्वविरोधिन: इति बृहत्तन्त्रे॥ ६॥

आत्मेत्येवोपासीतेति शब्दादुपसंहारस्यान्यथात्वमिति चेन्न। एते गुणोपास्या इति विशेषवचनाभावात्। सर्वैर्गुणैरेक एवेशितासावुपासितव्यो न तु दोषै: कदाचिदिति विशेष वचनाच्च आत्मेत्ये वेत्यवधारण मनात्म निरस्यर्थम्॥ ७॥

प्रकरणभेदान्नवोपसंहार: कार्य्य:। परो वरीय सत्वादिषु तावतैव श्रुतम्॥ ८॥

सर्वविद्या उक्ता सोऽहं नाम विदित्वास्मि नात्मविदिति वचनात् सर्वस्य ब्रह्म नामत्वात्तदुपसंहार: कार्य्य:। नामत्वात् सर्वविद्यानां गुणानामुपसंहृति:। कार्य्य च ब्रह्मणि परे नात्र कार्य्या विचारणा। इति ब्रह्म तर्क: इति चेत् सत्यम्। उक्तोऽप्युपसंहार: तत् प्रमाणमप्यस्त्येव नाम वात्ता ब्रह्मण: सर्वविद्यास्तस्मादेक: सर्वगुणैर्विचिन्त्य इति कौण्डिन्यश्रुतौ॥ ६॥

व्याप्तेश्च समञ्जसम् ॥ १० ॥

सर्वाभेदादन्यत्रे मे ॥ ११ ॥

आनन्दादयः प्रधानस्य ॥ १२ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे॥१३॥

इतरे त्वर्थसामान्यात् ॥ १४ ॥

आध्यानाय प्रयोजनाभावात् ॥ १५ ॥

युज्यते चोपसंहारोऽनुपसंहारश्च योग्यता विशेषात् ॥ गुणैः सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः । अन्यैर्यथाक्रमशैव मानुषैः कैश्चिदेव तु इति भविष्यत् पर्वणि ॥ १० ॥

सर्वगुणयुक्तत्वे नोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति । सम्पूर्णोपासनाद् ब्रह्मा सम्पूर्णानन्दनाद्भवेत् । इतरे तु यथा योगं सम्यग्युक्तो भवन्ति हीति पाद्मे ॥ ११ ॥

सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमित्याह । प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव । सच्चिदानन्द आत्मेति ब्रह्मो पास्यादिनिश्चितः । सर्वैश्च मुमुक्षूणां फलसाम्यादपच्चितेति ब्रह्मतर्के ॥ १२ ॥

फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपास्ता प्राप्तिः । नैव सर्वे गुणाः सर्वैरुपास्या मुक्तिभेदतः । विरिञ्चस्यैव यन्मुक्तानन्दस्य सुपूर्णतेति चिवाराहे ॥ १३ ॥

इतरे गुणाः फलसाम्यापेक्षयोपसंहर्त्तव्याः ॥ १४ ॥

आत्मशब्दाच्च ॥ १६ ॥

आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥

अन्वयादिति चेत् स्यादवधारणात् ॥ १८ ॥

उपसंहारानुपसंहार प्रमाण माह — आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात्। ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा। ज्ञातव्याश्चैव ध्यातव्या गुणाः सर्वेऽप्यतो हरेः। नान्यत् प्रयोजनं ज्ञाना ध्यानात् कर्मकृते रपि। श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यत इति परम संहितायाम्। गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः। नान्यत् प्रयोजनं मुख्यं गुणानां कथने भवेत्। ज्ञान ध्यान समायोगाद गुणानां सर्वशः फलम्। मुख्यं भवेन्न चान्येन फलं मुख्यं क्वचि भवेदिति बृहत्तन्त्रे ॥ १५ ॥

आत्मेत्येवोपासीतेत्यनुपसंहारे प्रमाणम् ॥ १६ ॥

न चानन्दादयः प्रधानस्येत्युक्तिविरोधः। यतः सत्यं ज्ञान मनन्तं ब्रह्म विज्ञान मानन्दं ब्रह्मेतिवदेवात्मशब्द गृहीतिः। अत ह्येते सर्व एकी भवन्तीत्युत्तरात्। आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते। नित्यत्वाच्च तथात्मेति वेदवादिभिरीश्वर इति बृहत्तन्त्रे ॥ १७ ॥

सर्वगुणाना मन्वय आत्म शब्दे भवति। आत्मव्याप्ते रात्मशब्दः परमस्य प्रयुज्यते इति वचनादिति चेत् सत्यं स्याच्चैवं आत्मेत्येवेत्यवधारणात्। अन्यथा सर्वोपसंहार वचनविरोधाः ॥ १८ ॥

कार्य्याख्यानादपूर्वम् ॥ १९ ॥

समान एवञ्चाभेदात् ॥ २० ॥

सम्बन्धा देव मन्यत्रापि ॥ २१ ॥

न वा विशेषात् २२ ॥

दर्शयति च ॥ २३ ॥

सम्भृतिद्युव्याप्त्यपि चातः ॥ २४ ॥

अलौकिका स्तस्य गुणा ह्युपास्याः अलौकिकं मुक्ति-कार्य्यं यतोऽस्येति कार्य्याख्यानादन्यत्राहष्ट एव गुणा उपास्याः ॥ १९ ॥

अपूर्वत्वेऽपि समानानामेवोपसंहारः । न तु त्रिवि-क्रमत्वादीनां कादाचित्कानां पृथक्त्वेन । नित्यविक्रान्त्या-दिष्वनन्तर्भावात् ॥ २० ॥

परमतो सम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्यु-पसंहार्य्यत्वं युज्यते । गुणास्तै विक्रमाद्याश्च संहर्त्तव्या नें संशयः । विरिञ्चस्यैव नान्येषां सहि सर्व गुणाधिक इति बृहत्तन्त्रे ॥ २१ ॥

न वात्मशब्देन सर्व गुण ग्रहीतिः अधिकारि विशे-षात् ॥ २२ ॥

सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीना मितरेषां न चैवेति भाल्लवेयश्रुतिः ॥ २३ ॥

संभृतिद्युव्याप्ती अपि देवादोना मुप संहर्त्तव्ये

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २५ ॥

वेधाद्यर्थभेदात् ॥ २६ ॥

हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २७ ॥

नान्येषां अतएव योग्यता विशेषात् देवादीना मुपास्यास्तु भूतिव्याप्त्यादयो गुणाः। आनन्दाद्यास्तु सर्वेषां अन्यथाऽनर्थकृद्भवेदिति च ब्रह्मतर्के ॥ २४ ॥

यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानां इतरान्येषामिति चेत् न पुरुषसूक्तोक्त विद्यायामपि केषाञ्चिद्गुणाना मनाम्नानात् सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदिताः। तथापि नैव सर्वेऽपि तस्मात् कार्य्योपसंहृति रिति ब्रह्मतर्के ॥ २५ ॥

भिन्धि न विद्धि करोमीति फलभेदेन सर्वशः। सत्यादीनां तेष्वयोगात् नाधिकारैकता भवेत्। अयोग्योपासनादीशुरनर्थं वार्थनाशनमिति हृत्तन्त्रे ॥ २६ ॥

मुक्तस्योपासना कर्त्तव्या न वेति अतो ब्रवीति—नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहस्तुत्युपगानवदेव मोक्षे उपासनादिब्रह्मविदाप्नोति परमिति मोक्षफलश्रवणादितरेषां तथोक्तम्। एतत् साम गायन्नास्ते इत्यादि ब्रह्मतर्के च। मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः। नियमानन्तरं विप्राः कुशायैरध्यीयत

साम्परायेतर्त्तव्याभावात् तथा ह्यन्ये ॥ २८ ॥

छन्दत उभयाविरोधात् ॥ २९ ॥

गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३० ॥

उपपन्नस्तल्लक्षणार्थोपलब्धे र्लौकिकवत् ॥३१॥

इति । क्षणो मुक्तैरिज्यते वीतमोहैरिति च भारते ॥२७॥

स्वेच्छयैवेत्यङ्गीकर्त्तव्यं मुक्तस्य तर्त्तव्यतीर्णत्वात् तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवतीति ह्यन्ये पठन्ति । वायुप्रोक्ते च । स्थितप्रज्ञत्वमापन्ना ये ज्ञानेन परमात्मनः । ब्रह्मलोकं गताः सर्वे ब्रह्मणा च परङ्गताः तीर्णतर्त्तव्यभागाश्च स्वेच्छयोपासते परमिति ॥ २८ ॥

कर्माणि कुर्वन्ति न वेत्याह स्वेच्छया कुर्वन्ति न वा बन्धप्रत्यवाययोरभावात् ॥ २९ ॥

बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम् । अन्यथा मोक्षत्वमेव न स्यात् कदाचित् कर्म कुर्वन्ति कदाचिन्नैव कुर्वते । नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम् । तीर्णतर्त्तव्यभागा ये प्राप्तानन्दाः परात्मनः । प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेदिति ब्रह्माण्डे ॥ ३० ॥

उपपन्नश्चैवंभावः प्राप्तलाक्षलक्षणफलस्य यथा लोके निर्धनत्वेन विष्णुक्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ॥ ३१ ॥

अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्
॥ ३२ ॥

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥३३॥

अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौ-
पसदवत्तदुक्तम् ॥ ३४ ॥

प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः केषाञ्चिन्न यथोपसंहारनियम इति न मन्तव्यम्। सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैरित्युपसंहारविरोधादन्यथाविरोधात्। न हि कश्चिद् ब्रह्मवित् सृतिमनुभवति मुक्तो ह्येष भवति तस्मादाहुः सृतिर्हन्तीति कौण्डिन्यश्रुतेश्च। यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ॥ ३२ ॥

यथा यथाधिकारो विशिष्यते एवमुक्तावानन्दो विशिष्यते। मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्यः ऋषीणामृषिभ्यो देवानां देवेभ्यः इन्द्रस्य इन्द्रात् रुद्रस्य रुद्रात् ब्रह्मण एष ह्येव शतानन्द इति चतुर्थवेदशिखायाम्। अध्यात्मे च। ज्ञानञ्चोपासनञ्चैव मुक्तावानन्द एव च। यथाधिकारं देवानां भवत्येवोत्तरोत्तरमिति ॥ ३३ ॥

न चासमत्वेन विरोधो भवति। ब्रह्मधीत्वाद्दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च। औपसदवच्छ्रियवत् उक्तं चतुरश्रुतौ नानाविधा जीवसंघा विमुक्तो न चैव

इयदामननात् ॥ ३५ ॥

अन्तराभूतग्रामवत् स्वात्मनः ॥ ३६ ॥

अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३७ ॥

व्यतिहारो विंशिषन्ति हीतरवत् ॥ ३८ ॥

तेषां ब्रह्मधियां विरोधः । दोषाभावाद् गुरुशिष्यादिभावाल्लोकेऽपि नास्ती किमु तेषां विमुक्तेरिति च ॥ ३४ ॥

नासायास्य प्राणान्तमुत्तरोत्तरमुत्तमत्वमुक्तं न प्राणात् किञ्चिदूर्ध्व उक्तं तथापि पूर्ववत् स्यादिति न वाच्यम् । प्राणो वाव सर्वेभ्यो भूयान् प्राणाद्भूयान् प्राणो ह्येव भूयांस्तस्माद्भूयानामिति कौठरव्य श्रुतेः ॥ ३५ ॥

यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव । एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न । प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावेन प्रमाणं दृश्यते चान्यतोत्तमत्वम् ॥ ३६ ॥

प्राणस्य सर्वोत्तमत्वे परमात्मनः भेदानुपपत्तिः। अन्येभ्यः प्राणस्योत्तमत्वं तस्मात् परमात्मनो ह्युपदिष्टम् ॥ ३७ ॥

नेति चेन्न । उक्तं प्राणात् परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण । एष तु वा अतिवदतीति विशेषं सन्ति हि यथेतरेषु विशेषणम् । उत्तमत्वं देवानां मुक्तादपि हि

सैव हि सत्यादयः ॥ ३९ ॥

कामादितरत्र तत्र चायतनादिभ्यः ॥ ४० ॥

आदरादलोपः ॥ ४१ ॥

भानवात्। तेभ्यः प्राणश्च तस्माच्च नित्यमुक्तस्य वै हरेरिति च बृहत्तन्त्रे ॥ ३८ ॥

कृतिर्निद्राज्ञानमित्यादीनां भेदात् बहव उत्तमा इति चेत् न सत्यादिगुणास्तस्यादेव परदेवता याः स्वरूपभूताः ब्रह्मतर्के च नामादिप्राणपर्य्यन्तात् यो हि सत्यादिरूपवान्। तस्मै नमो भगवते विष्णवे सर्वजिष्णवे इति। सत्याद्या बहुमात्मानो यद्गुणा समुदीरिताः। तस्मै नमो भगवते यस्मादेव विमुच्यते इति। चाध्यात्मे ॥ ३९ ॥

प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते। स्वेच्छयेव मूलस्थाने स्थितोऽन्यत्र वावतारान् करोतीश्वरेच्छानुसारेणैव सर्वायतनाः सर्वकालाः सर्वावस्थाः सर्वेच्छाः सर्वज्ञानवद्वा बन्धिका सैषा प्रकृतिरितिवत् स स्मृतेः। नामादयस्तु बन्धमोचकत्वात् घरोऽपि च। उभयोरप्यभावेन यथा व्यक्तं न तूदितम्। श्रुतौ तथा जीवपरावुच्यते किञ्च नेतरत् नोच्यते तत्तदा तत्वद्वयं वै समुदाहृतमिति ब्रह्मतर्के ॥ ४० ॥

अबद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्या भवति। यथा श्रीर्नित्यमुक्तापि प्राप्तकामापि सर्वदा। उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेदिति बृहत्तन्त्रे ॥ ४१ ॥

उपस्थितेऽतस्तद्वचनात् ॥ ४२ ॥

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४३ ॥

प्रदानवदेव तदुक्तम् ॥ ४४ ॥

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४५ ॥

अनादिकाले भगवत्सम्बन्धित्वाद् युज्यते च नित्यमुक्तस्याः । द्वावेता वनादिनित्या वनादियुक्तौ नित्ययुक्ता वनादिकृतौ ये हेयं परमो या च प्रकृतिः रमतेऽस्यां परमो रमते ह्यस्मिन् प्रकृतिस्तस्मिन् रमते परमो न त्वस्मिन् प्रकृतिरत एनमाहुः परम इतीति गौपवनश्रुतिवचनात् ॥४२॥

दर्शनार्थं ह्युपासनं तच्च श्रवणादेरेव भवति । अतः किमर्थमित्यत उच्यते । तत्त्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव हि शब्देनात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतिं सूचयति । श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः । ब्रह्मतर्के च । श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयञ्च पराणुद्य लभते ब्रह्मदर्शनमिति ॥ ४३ ॥

न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति । किन्तु सति कर्त्तव्ये न यथा गुरुदत्तं तथैव भवति आचार्य्यवान् पुरुषो वेदेति ह्युक्तम् ॥ ४४ ॥

गुरुप्रसादः सुप्रथितो वा बलवानिति निगद्यते ।

पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४६ ॥

अतिदेशाच्च ॥ ४७ ॥

ऋषभादिभ्यो ब्रह्मविद्यां ज्ञात्वापि सत्यकामेन भगवांस्त्वेव मे कामे ब्रूयाच्छ्रुतं ह्येवं मे भगवद्दृशेभ्यः आचार्य्यात् ह्येव विद्या विदिता साधिष्टं प्रापयतीति वचनात्। अत्र हि न किञ्चन वियायत्यनुज्ञानात्। उपकोषलवचनाच्च लिङ्गभूयस्त्वाद् गुरुप्रसाद एव बलवान् तर्हि तावतालमिति न मन्तव्यं श्रोतव्यो मन्तव्य इत्यादिस्तर्दापि कर्त्तव्यम्। वाराहे च। गुरुप्रसादो बलवान्न तस्माद् बलवत्तरम्। तथापि श्रवणादिश्च कर्त्तव्यो मोक्षसिद्धये इति ॥ ४५ ॥

न च पूर्वप्राप्त एव गुरुरिति नियमः समग्रानुग्राहकं चेत् पश्चात्तु नः प्रकरोति स्वयमेव तदा विकल्पः स्यान्मानसक्रियावत्। यथोभयोर्ध्यानयोः समयोः पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि। गृह्णीयादविचारेण विकल्पः समयोर्भवेत्। समग्रानुग्रहाभावात् सत्यकामः स्वकं गुरुम्। ऋषभाद्यनुज्ञया चैव प्रायस्तस्माच्च युज्यत इति बृहत्तन्त्रे। समग्रानुग्रहं कश्चित् स्वयमेव समो यदि। कुर्य्यात् पुनश्च गृह्णीयादविरोधेन कामतः। ध्यानयोः समयोर्यद्वद्विकल्पः कामतो भवेत्। एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि चेति महासंहितायाम् ॥ ४६ ॥

विद्यैव तु निर्धारणात् ॥ ४८ ॥

दर्शनाच्च ॥ ४९ ॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ५० ॥

अनुबन्धादिभ्यः ॥ ५१ ॥

ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणु हि ते त्वामवतु। यथा ब्रह्मोपचरेर्यथा मामुपचरेर्यै चान्येऽस्मद्विधाः। श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणु हि ते त्वामवन्त्विति पौष्यायणश्रुतावतिदेशाच्च ॥ ४७ ॥

न च कर्मणैव हि संसिद्धिमास्थिता जनकादय इत्यादि नान्यमोक्षसाधनम्।

तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यते अयनायेति निर्द्धारणाद्विद्ययैव मोक्षः ॥ ४८ ॥

न केवलं विद्यका किन्तु अपरोक्षज्ञानेनैव च। सर्वान् परो मायया यं भिनोति दृष्ट्वैव तं मुच्यते नापरेणेति कौशिकश्रुतेः ॥ ४९ ॥

सावधारणा बलवती श्रुतिः। इन्द्रोऽश्वमेधान् शतमिष्ट्वापि राजा ब्रह्माणमीड्यं तमुवाचोपसन्नः न कर्मभिर्न धनैर्नैव चान्यैः पश्येत् सुखं तेन तत्त्वं ब्रवीहीति च बलवल्लिङ्गम्। नास्त्यकृतः कृतेनेत्युपपत्तिश्च कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते। तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिन इति युक्तिमद्भगवद्वचनम्। अतो न प्रमाणान्तरबाधः कर्मणैवेत्ययोगव्यवच्छेदः ॥ ५० ॥ ॥ ५१ ॥

**प्रज्ञान्तरपृथक्त्ववत् दृष्टिश्च तदुक्तम् ॥ ५२ ॥**

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५३ ॥**

न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनं किन्तु भक्त्यादिभिश्च। सर्वलक्षणसम्पन्नः सर्वतो विष्णुतत्परः। यद्गुरुः सुप्रसन्नः सन् दद्यात्तन्नान्यथा भवेत्। तथाप्यनादिसंसिद्धभक्त्यादिगुणयोगतः। लभेद् गुरुप्रसादञ्च तस्मादेव च तद्भवेदिति। भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम्। दद्याच्छमदमादिञ्च तेन चैते गुणाः पुनः। तैः सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेदिति च नारायणतन्त्रे। उपासनाभेदेन दर्शनभेदः। तच्चोक्तं काठकश्रुतौ। अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति देवावाव सर्वदृष्टयस्तेषु चोत्तरोत्तर आ ब्रह्मणोऽन्येषु यथायोगं यथा ह्याचार्या आचक्षत इति। आध्यात्मे च दृष्टैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा। दर्शनेनान्तरस्थानां देवाः सर्वत्र दर्शनात्। तेषां विशेषमाचार्यो वेत्ति सर्वज्ञताङ्गत इति ॥ ५२ ॥

न सामान्यदर्शनमात्रेण मुक्तिः यथा मृत्युमात्रान्न हि लोकापत्तिमात्रमुक्तिसामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनादिति नारायणतन्त्रे। मुच्यते नात्र सन्देहो दृष्ट्वा तु स्वात्मयोग्ययेति च दर्शनेनात्मयोग्येन मुक्तिर्नान्येन केनचिदिति चाध्यात्मे। भक्तिरेवैनं नयति दर्शयति भक्तिवशः

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५४
एक आत्मनः शरीरे भावात् ॥ ५५ ॥
व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥५६॥
अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५७॥

पुरुषो भक्तिरेव भूयसीति माठरश्रुतेः । न परमात्मनो दर्शनमिति चेत् न, तस्यैष आत्मा विशते ब्रह्मधामेति श्रुतेः । कथं तर्ह्येषा श्रुतिः ॥ ५३ ॥

परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददातीति प्रधानसाधनत्वात् भक्तिः करणत्वेनोच्यते । मायावैभवे च भक्तिस्थः परमो विष्णुस्तयैवैनं वशे नयेत् । तयैव दर्शनं यातः प्रपद्यान्मुक्तिमेतया । स्नेहानुबन्धोयस्तस्मिन् बहुमानपुरःसरः भक्तिरित्युच्यते सैव कारणं परमीशितुरिति । सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥ ५४ ॥

जीवांशानां पृथगुत्पत्तेर्ज्ञानादियोग्यतापेक्षयेति न मन्तव्यम् । कुतः ? अंशांशिनोरेकत्वमेव । अंशिकर्मनिर्मितशरीर एवांशस्य भावात् ॥ ५५ ॥

ज्ञानादिभेदे विद्यमानेऽपि न अंशांशिनोः पृथग्भाव एव तदुपासनादिभोगादंशस्य । परमसंहितायाञ्च । अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा । पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणेति ॥ ५६ ॥

ब्रह्माद्यङ्गदेवता च बद्धोपासनादिप्रतिशाखं प्रतिवेदञ्च

मन्त्रादिवद्वाऽविरोधः ॥ ५८ ॥

भूम्नः क्रतुवत् ज्यायस्त्वं तथा हि दर्शयति ॥५९

नाना शब्दादिभेदात् ॥ ६० ॥

विकल्पोऽविशिष्टफलत्वात् ॥ ६१ ॥

नोपसंक्रियते। हिशब्दात् समत्वादीत्तमत्वाद्वा नाङ्गदेवा-द्युपासनम्। उपसंहार्य्यमित्याहुर्वेदसिद्धान्तवेदिन इति ब्रह्मतर्कवचनात् ॥ ५७ ॥

सर्वदेवतामन्त्रा यथा धीयन्त एवमविरोधो वा। उपा-सनाङ्गदेवानां परमाङ्गतया भवेत्। उपसंहृतिर्विशेषे तु फलानामन्यथा न तु। पुरुषाणां विशेषाद्वा यथायोगं भविष्यतीति वृहत्तन्त्रे ॥ ५८ ॥

सर्वगुणेषु भूम्नः गुणस्य ज्यायस्त्वं क्रतुवत् सर्वच सहभा-वात् दीक्षाप्रापणीयोदनीये सवनत्रयावभृथात्मकः क्रतुः। भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते। तस्माद्भूमा गुणतो वै विशिष्टो यथाक्रतुः कर्म्म मध्ये विशिष्ट इति सौपवनश्रुतिः ॥ ५९ ॥

शब्दोऽनुमा तथैवाप्तो योग्यताभेदतः सदा। ब्रह्मादी-नामेकसर्थं वसुधा दर्शयन्ति हि। अतः पूर्णत्वमीशस्य ज्ञानैवेषां प्रदृश्यते। अतः फलस्य नानात्वं नानैवोपासनं यत इति ब्रह्मतर्के। अतो भूमत्वमपि नानैवोपा-स्यते ॥ ६० ॥

स्वयोग्योपासनान्तरं समाप्यापि कस्यचिदुपासनं विक-

काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्व-

भावात् ॥ ६२ ॥

अङ्गेषु यथाश्रय भाव: ॥ ६३ ॥

शिष्टेश्च ॥ ६४ ॥

समाहारात् ॥ ६५ ॥

त्पन्नं भवति विशिष्टफलापेक्षया । मुक्त्यर्थमात्मयोग्यं हि कार्य्यमेव ह्युपासनम् । नृसिंहादिकमन्यच्च दुरितस्य निवृत्तये । उपासते यथायोगं न वा फलविभेदत इति ब्रह्मतर्के ॥ ६१ ॥

यस्य यस्य हि य: कामस्तस्य तस्य ह्युपासनम् । तादृशानां गुणानाञ्च समाहारं प्रकल्पयेत् । अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् । तुष्ट्यर्थमीश्वरस्यैव न चोपासा विदुष्यतीति बृहत्तन्त्रे ॥ ६२ ॥

अङ्गदेवतानां यथा परमेश्वराङ्गाश्रयत्वं चक्षुषो: सूर्य्योऽजायतेत्यादिना तथा भावना कर्त्तव्या यस्मिन् यस्मिन् यो हि चाङ्गे निविष्ट: परस्य चिन्त्यत: तथा तथैवेति पौत्रायण श्रुति: ॥ ६३ ॥

अङ्गै: पराद् ये हि देवा: विसृष्टास्तत्तद्गुणान् परमे संहरेत तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षु: परमं व्रजेतेति कात्यायनश्रुतौ ॥ ६४ ॥

समाहारवचनाच्च ॥ ६५ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६६ ॥

न वा तत् सहभावाश्रुतेः ॥ ६७ ॥

दर्शनाच्च ॥ ६८ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे तृतीया-
ध्यायस्य तृतीयः पादः समाप्तः।

---

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

साधारण्यात् सर्वगुणाः परस्य समाहार्यास्तत्तदृग्भी मुमुक्षोरिति माण्डव्यश्रुतेश्च ॥ ६६ ॥

न चाङ्गदेवेतोपसंहारः कार्य्यः उपसंहारस्य सहाश्रवणात् ॥ ६७ ॥

सत्यं ज्ञानं परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात्। नान्यत् किञ्चित् समुपासीत धीरः सर्वैर्गुणैर्देव गुणा उपासत इति कमठ श्रुतौ ॥ ६८ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रे तृतीयाध्यायस्य
तृतीयः पादः समाप्तः।

—०—

ज्ञानसामर्थ्यमस्मिन् पादे उच्यते यद्दर्शनार्थमुपासनोक्तौ तस्माच्च दर्शनात् सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च

शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥ २ ॥

आचारदर्शनात् ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥

समन्वारम्भणात् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥

नियमाच्च ॥ ७ ॥

कामान् तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेद्भूति काम इति शब्दाद्यस्त्वेव मोक्षसाधनत्वम् ॥ १ ॥

ज्ञानस्य स्वर्गादिषु तत्साधनकर्मशेषत्वेन सर्गं धनादेहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चिदिति जैमिनिः ॥ २ ॥

ज्ञानिनामेव देवादीनामाचारदर्शनात् ॥ ३ ॥

यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति शेषत्वश्रुतेः ॥ ४ ॥

कर्मैव देहं दैविकं मानुषं वाप्यन्वारभेत्तापरास्तत्र हेतुः । भोगांस्तदीयांश्च यथा विभागं ददाति कर्मैव शुभाशुभं यदिति माठरव्यश्रुतेश्च । संशब्दैः प्राधान्यं दर्शयति ॥५॥

ज्ञानी च कर्माणि सदोदितानि कुर्य्यादकामः सततं भवे तोकति कमठश्रुतौ ज्ञानवतो विधानात् ॥ ६ ॥

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८

तुल्यन्तु दर्शनम् ॥ ९ ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। एवं त्वयि नान्यथा तोऽस्ति न कर्म लिप्यते नरे इति ॥ ७ ॥

ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्ते स यथा यथा कर्म्म कुरुते तथा तथाधिको भवतीति कौठरव्यश्रुतेः। युधिष्ठिरादीनां राजसूययागादिना फलाधिक्यदर्शनाच्चेति बादरायणमतम् ॥ ८ ॥

राजसूयादिक्रतावक्रतौ च सममेव तेषां विज्ञानम्। विज्ञानमेतत् सर्वेषां मुनीनां ब्रह्मदर्शनात्। स्यादेव मोक्षो नान्यस्मादिति तत्रापि चिन्तता। स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः। ज्ञानेनाधिक्यमित्याहुर्जैमिन्याद्याश्च केचन। अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते। इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः। यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम्। यथाकाशस्त्वनन्तोऽपि व्याप्तो हस्तावधिस्तथा। प्रादेशोऽपि हि सत्त्वेन तथैवैषां मतानि तु। स्वयन्तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान्। अनन्ताकाशवत् पश्यन् निखिलं पुरुषोत्तमः। ज्ञानेनैवाप्यते सर्वं कर्म्मणा चाधिकं भवेत्। इति प्राह महायोगी पुमर्थानां विनिर्णये इति भविष्यत्पर्वणि। ज्ञानिनामपि देवानां विशेषः कर्म्मभिर्भवेत्। क्षीणे क्रते वा ज्ञानस्य न विशेषोऽस्ति कर्म्मणीति ब्रह्मतर्के ॥ ९॥

असार्वत्रिकी ॥ १० ॥

विभागः शतवत् ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥

नाविशेषात् ॥ १३ ॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥

सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारितेत्यत आह न सर्वेषामधिकारः ॥ १० ॥

न कोऽपी हि देवानां तेषां मध्ये शतस्य तु। सोऽनाधिकारी वेदोक्ते ब्रह्मणोहि शताधिके। यथा तथैव संख्येया प्रजास्तासु कियान् जनः। ज्ञानाधिकारी स प्रोक्तो विष्णुपादैकसंश्रय इति वचनात् सुखापेक्षा साम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥ ११ ॥

कस्याधिकार इत्यत आह। अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते। गुरुभक्ति विहीनस्य शमादिरहितस्य च। न च वर्णवरस्यापि तस्मादध्ययनान्वितः। ब्रह्मज्ञाने तु वेदोक्ते ह्यधिकारी सतां मत इति ब्रह्मतर्के। षठेद्दानयार्यानधीयीताथ विचार्य ब्रह्म विन्देदिति च कौषायण श्रुतिः ॥ १२ ॥

न सामान्येनाधिकारो देवादीनाम्। अथ पुमर्थं साधनाश्चर्या धर्मज्ञानमित्युत्तरोत्तरं तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरमिति कौण्डिन्यश्रुतिः ॥ १३ ॥

अथ मुनिरमौनञ्च मौनं निर्विद्याथ ब्राह्मणः। स

कामचारेण चैके ॥ १५ ॥

उपमर्दञ्च ॥ १६ ॥

ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

ब्राह्मणः केन स्यात् येन स्यात् तेनेदृश एवेति ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह। न विधिर्ज्ञानिनस्तयेऽनुमतिमात्रं वा युज्यते च ॥ १४ ॥

कामचाराः कामभक्ष्याः कामवादाः कामिनैकेम् लोकमुत्सृज्याथ परात् परमीयुरनारभ्यणमिति चके पठन्ति ॥ १५ ॥

ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपसृज्य पुण्यं च पापं च काममाचरन्तो न ब्रह्मानुव्रजन्तीति चतुरश्रुती ॥१६॥

न तावत् कामचाराणां ज्ञानेऽधिकारः। न इमं परमं गुह्यमूर्ध्वरेतःसु भाषयेत् न तथा विद्यते भूयान् यं प्राप्यापि भूयसे इति माठरश्रुतेः ॥ १७ ॥

प्रातरुत्थायाथ सन्ध्यामुपासीतेमां सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवाश्च मे जुहुयाद्दानावर्त्तयीत नान्यत् किञ्चिदाचरेन्न सुरां पिबेत्। न पलाण्डु भक्षयीत न भूयं वदेत् न विसृरेतात्मानं सोमं पिबेत् हुतशेषेण वर्त्तयेदित्याचार परामर्शेन विधिबन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते। न च निषिद्धं कर्म

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

**विधिर्वा धारणवत् ॥ २० ॥**

**स्तुतिमात्रमुपादानादिति चेत् नापूर्वत्वात् ॥२१॥**

कर्त्तव्यमेवेति चोदना । ब्राह्मणो न च हन्तव्य इत्याद्यपवादश्च ॥ १८ ॥

अनुष्ठेयानां मध्यत एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते केन स्याद् येन स्यात्तेनेदृश एवेति साम्यश्रुतेः । यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यत इति भगवद्वचनाच्च ॥ १९ ॥

केन स्याद् येन स्यादिति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम् । एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्य्या नान्येषामिति वा । स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिनोदिता । नाशङ्कं तन्मतं क्वापि विष्णुः प्रत्यक्षचोदना । इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चनेति हि ब्राह्मे ॥ २० ॥

स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामान्यविधि स्वीकारादिति चेत् । नापूर्वत्वात् परवशत्वात् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि । विधीनां विषयस्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ । परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरत इति हि ब्रह्मतर्के ॥ २१ ॥

भावशब्दाच्च ॥ २२ ॥

पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

अतएव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

यथा विधानमपरे विधिर्भावे प्रजायते। ब्रह्मणः परमस्यैव सर्वविध्यतिदूरत इति हि चतुरश्रुतौ ॥ २२ ॥

केन स्यात् येन स्यादित्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न त्रेधा ह वाव ज्ञानिनो विधिनियताः, अनियताः, स्वेच्छानियताः, इति विधिनियतामनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियतमिति गोपवनश्रुतौ विशेषितत्वात् ॥ २३ ॥

एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानाञ्च सम्बन्धो भवति ॥ २४ ॥

अतएव ज्ञानस्य मोक्षदानेनाग्निहोत्राद्यपेक्षा ब्रह्मतर्के च। येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः। शुभकर्मभिराधिक्यं विपरीते विपर्ययः। स्वेच्छावृत्त्यै भवेद् ब्रह्मणः प्रायशस्तथा। देवानामपि सर्वेषां विशेषाद्युत्तरोत्तरमिति ॥ २५ ॥

सर्वधर्मापेक्षा च ज्ञानस्योत्पत्तौ विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतेः। यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते। न विनिष्पन्नगतेरश्वादिप्राप्तौ ॥ २६ ॥

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥**

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

**अबाधाच्च ॥ २९ ॥**

**अपि च स्मर्य्यते ॥ ३० ॥**

यद्यपि ज्ञानेनैव मोक्षो नियतस्तथापि ज्ञानी शमदमाद्युपेतः स्यात् । आचार्य्याद्विद्यामवाप्यै तमात्मानमभिपश्य शान्तो भवेद्दान्तो भवेदनुकूलो भवेदाचार्य्यं परिचरेत् परिचरेदाचार्य्यमिति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः । आह्नीं यावत उपनिषदः ब्रूमेति तस्यैव तपोदमः कर्म्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनं यो वा एतमुपनिषदं वेदेतिज्ञानाङ्गतया तेषां अवश्यानुष्ठेयत्वात् यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा । तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः । अवश्यं करणीयास्मादन्यथाल्पफलं भवेदिति चाग्नेये । तुशब्दः पूर्णफलार्थं सूचयति ॥ २७ ॥

यदि ह वा अथैवं विन्निखिलं भक्षयीतैवमेव स भवतीति सर्वान्नानुमितिः प्राणात्ययविषया । न वाऽस्य जीविष्यन्निति होवाच कामीन उदपानमिति दर्शनात् ॥ २८ ॥

अन्यायाचरणाभावेन हि ज्ञानस्याबाधनम् । अतो विद्वानपि न्याय्यं वर्त्तेतोत्कर्षसिद्धये इति च ब्रह्मतर्के ॥ २९ ॥

अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः । एतादृशोऽपि नाचारं श्रौतं स्मार्त्तं विसर्ज्जयेदिति श्रीहरिवंशेषु ॥ ३० ॥

**शब्दश्चातोऽकामकारे ॥ ३१ ॥**

**विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥**

**सहकारित्वेन च ॥ ३३ ॥**

**सर्वथापि तु त एवोभयलिङ्गात् ॥ ३४ ॥**

स यत्र तदेवं मन्वान एवं पश्यन्न कामं चरति चरन्न कामं भक्षयीत न काममनुवर्त्तेतेति कौण्डिण्य श्रुतौ। अत इत्यल्पफलकत्वं सूचयति न निषिद्धानि वर्त्तेत पूर्णज्ञान फलेच्छयेति पाद्मे ॥ ३१ ॥

न केवलं निषिद्धाकरणेन पूर्य्यते कर्त्तव्यञ्च वर्णाश्रम-विहितं कर्म्म। प्रश्यन्नपीममात्मानं कुर्यात् कर्म्म विचार-यन्। यदात्मानं सुनियतमानन्दोत्कर्षमाप्नुयान्निति कौठा-रवश्रुतौ विहितत्वाच्च। अपिशब्दो वर्णधर्म्मसमुच्चयार्थः ॥ ३२॥

यथा राज्ञः सह कार्य्ये मन्त्री तथा कृतेऽत्र चितिपः कार्य्यमृच्छेत्। एवं ज्ञानं कर्म्म विनापि कार्य्यं सहाय-भूतं न विचारः कुतश्चिदिति कमठश्रुतौ सहकारित्वोक्तेश्च। ज्ञानान्मोक्षो भवत्येव सर्वकार्य्यकृतोऽपि तु। आनन्दो कसते कायाच्छुभं कृत्वा विवर्द्धते इति च ब्रह्माण्डे। सर्व-दुःखनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि। उपासया कर्म्म-भिश्च भक्त्या चानन्दचित्ततेति बृहत्तन्त्रे। धर्म्मस्वरूपचित्त-त्वाद् यो यो देवो मनोगतः। स एव धर्म्मो विज्ञेयो न ह्येते लोकसम्मिता इति च पाद्मे ॥ ३३ ॥

सर्वप्रकारेणोत् साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं

अनभिभवञ्च दर्शयति ॥ ३५ ॥

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

अपि च स्मर्य्यते ॥ ३७ ॥

विशेषानुग्रहश्च ॥ ३८ ॥

आप्नुवन्ति नान्ये। य आत्मा अपहत पाप्मा विजरो विमृत्युर्विशोको विजिघित्सो पिपासुः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति श्रुत्याचार्य्योपदेशसाम्येऽपि विरोचनविरीतज्ञानमाप इन्द्रः सम्यग्ज्ञानमित्युभयविधिलिङ्गात् ॥ ३४ ॥

दैवीमेव सम्पत्तिं देवताभिगच्छन्ति आसुरीमेवासुरा नैतयोरभिभवः कदाचित् स्वभाव एव ह्यवतिष्ठत इति स्वभावानभिभवञ्च दर्शयति ॥ ३५ ॥

सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्य दृष्टेः ॥ ३६ ॥

असुरा आसुरेणैव स्वभावेनैव कर्मणा। ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात्। देवा दैवस्वभावेन कर्मणा चाप्यसंशयम्। सम्यग्ज्ञानेन परमां गतिं यान्ति वैष्णवीम्। नानयोरन्यथाभावः कदाचित् क्वापि विद्यते। मानुषा मिश्रमतयो विमिश्रगतयोऽपि चेति स्कान्दे ॥३७॥

शृणु वै वीर उग्रसुयं दमायन्नन्यमन्यमति नेति नियमानः। एधमानाद्द्विषु भयस्य राजाभोक्तय विश इन्द्रो मनुष्यानिति विशेषानुग्रहञ्च दर्शयति-देवेषु परमेश्वरस्य ॥

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात्तद्रू-
पाभावेभ्यः ॥ ४० ॥

असुरान् दमयन् विष्णुः स्वयञ्चाप्यसुरान्नयन् । पुनः पुन-र्मानुषांस्तु स्रुता वा वर्त्तयत्य साविति भविष्यत्पर्वणि ॥३८।

देवभागादसुरभाग एव बहुलः । तस्मान्न जनतामिया-दिति लिङ्गात् । चशब्दात्ततः कनीयस एव देवा ज्यायसा असुरा इति श्रुतेश्च । असुरा बहुला यस्मात्तस्मान्न जनता-मियादिति ब्राह्मे ॥ ३९ ॥

असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवी-मासुरीञ्च गतिमीयुरात्मीयां जातिमनुभवन्ति इति नियम श्रुतेः । नासुराणां दैवरूपं न देवानामासुरं न चोभयं मनुष्याणाम् । यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवतीति तद्रूपत्वश्रुतेः । तं भूतिरिति देवानुपा चक्रिरे ते बभूवु-स्तस्मादार्थे तर्हि सुप्तो भूर्भुवस्वरित्येव प्रश्वसित्यभूतिरित्य-सुरास्तेह पराबभूवुरिति देवासुराणां भावाभावश्रुतेश्च देवानां भूतिरित्येव मनो विष्णौ स्वभावतः । असुराणाम-भूतित्वे नैतत् नियमतोऽन्यथा । देवाः पापाभिभूतत्वात् प्रह्लादाद्या बभूविरे अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेदिति चाध्यात्मे ॥ ४० ॥

**न चाधिकारिकमपि पतनानुमानात्तद्योगात्॥४१॥**

**उपपूर्वमपि त्वेके भावमशनवत् तदुक्तम् ॥४२॥**

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यं ब्रह्मादीनामपि नाकाङ्क्ष्यं किमु परस्येति सूचयितुमपि शब्दः। चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थं भावान्तरसूचकः। अयोग्यमारोहन् प्रपतनं हि दृश्यते। एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य वाकाङ्क्षायां पतनमनुमीयते न देव पदमन्विच्छेत् कुत एव हरेर्गुणान्। इच्छन् पतति पूर्वस्मादधस्तात् यत्र नोत्थितिरिति ब्रह्माण्डे। स्वकीयमिच्छमानन्तु राजाद्याः पातयन्ति हि। एवमेव सराद्याश्च हरिश्च स्वपदेच्छुकमित्याद्यनुमानरूपवाक्याच्च मायाभिरत्सिसृचत इन्द्राद्यामारुरुचतः अवदस्युरधुनुथा इति च श्रुतिः॥ ४१ ॥

उपदेवपदञ्च नाकाङ्क्ष्यमित्येके। भावमशनवदृषि परमेव। तथोक्तमिन्द्रद्युम्न शाखायां यथर्षीन् प्रजापतीन्नाकाङ्क्षेदेवं न गन्धर्वान्न विद्याधरान्न नृसिंहानिति इहत् संहितायाञ्च। न देवानभिकाङ्क्षेत कुत एव हरेर्गुणान्। प्राजापत्यान्ना चार्यांश्च गान्धर्वादीनपि क्वचित्। ऋष्यादिषु विशेषेपि तु दोषो नैव विशेषित इति विशेषदर्शनार्थमेवेत्युक्तम् ॥ ४२ ॥

देवर्षीणां गन्धर्वाणां पदाकांक्षः पतेद्ध्रुवम्। अन्यत्र

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥
आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ४५
श्रुतेश्च ॥ ४६ ॥

शुभमाकांचन पतद्विरोधत इति श्रुतिः। नानात्वमेव कामानां नाकामः क्व च दृश्यन्यते। अतो विरुद्धकामः स्यादकामस्तेन भण्यत इत्याचाराच्च ॥ ४३ ॥

ओं ब्रह्मविदाप्नोति परमित्यादि फलं स्वामिनां देवानामेव भवति। यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति। यदु किञ्चेमाः प्रजा विजानते देवा एव तद्विजानते। देवानां ह्येतद्भवति स्वामी हि फलमश्नुते। नास्वामी कर्म्म कुर्वीत इति माध्यन्दिनश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥

यत्र यागेषु ऋत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते तदर्थं देवैः क्रियमाणत्वात् ॥ ४५ ॥

तृतीयः स्वपक्षः देवानां ज्ञापनादिकर्माणि सहकार्य्यान्तरत्वेन प्रजा विधीयन्ते। यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते। यथा वा आचार्य्यस्य शिष्याः। वाराहे च। ज्ञानादिदानं देवानां विष्णुना साधु चोदितम्। वेदे च तेषां विहितं तत्राचार्यो महत्तरः। विहितः सहकार्य्यन्तरम् प्रजाः। पादत्वेन यथा राज्ञो यथा शिष्या गुरोरपि। तस्माच्छुभफलं तासां आचा-

सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥४७॥

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥

र्यांणां महत्तरम् । ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरमिति ॥ ४६ ॥ ४७ ॥

कुटुम्बो शुचो देशे स्वाध्यायमधीयानो धार्मिकान् विदधादित्युक्त्वा न च पुनरावर्त्तत इति गृहिणोपसंहारः क्रियते तस्माद्गृहस्थस्य एवोत्तमत्वमिति न वाच्यम् । यतः कृत्स्न गृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते । कृत्स्ना ह्येते गृहिणो देवाः कृतकृत्या एते यतयोऽप्येतेषां नु मुक्ता दायमुपयन्ति न वै ते गृहान् विसृजन्त्यरागा अप्येषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्त्तार इति पौत्रायणश्रुतिः ॥ ४८ ॥

न चाश्रमद्वयमेव देवानां देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था देवा एव यतयः यथैते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्तीति कौठरव्यश्रुतौ । यतित्व दृष्टान्ते मान्येषामप्युदेशात् ॥ ४९ ॥

एतां विद्यामधीत्य ब्रह्मदर्शीवाव भवति स एतां मनुष्येषु विब्रूयात् यथा यथाह वै ब्रूयात् तथा तथाधिको भवतीति माठरश्रुतौ विद्यादानं सूयते । तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्य अन्वयाद्युक्तेः आवि-

अनाविष्कुर्वन्नन्वयात्॥ ५०॥

ऐहिकमप्यप्रस्तुत प्रतिबन्धे तद्दर्शनात्॥५१॥

कारे योग्यानामपि स्वीकारापत्तिरप्राप्तिः तच्च निषिद्धं मानस्तेनेभ्यो ये अभिद्रुह्यस्ये निरामिणो रिपवोऽन्येषु जागृधुरिति येषां नैतन्नपरं किञ्च नेकं ब्रह्मणस्पतेः ब्रूहि तेभ्यः कदाचित् अथो शमेनोपरता मनुष्या ये धर्म्मिणो ब्रूहि तेभ्यः सदानः आदेवाना मोहते विप्रयो हृदि बृहस्पते न परः साम्ना विदुरिति। विद्याह वै ब्राह्मण-माजगाम गोपाय मां शेवधिष्टेऽहमस्मि। अनाय्यकाया-नृजवे शठाय मास्म ब्रूया ऋजवे ब्रूहि नित्यमिति च॥४९॥

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति दर्शनार्थं श्रवणादि विधीयते तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे श्रुत्वात्मानं मतिपूर्वं ह्युपास्ये हैव दृष्टिं परमस्य विन्देत्। यद्यारब्धं कर्म निबन्धकं स्यात् प्रेत्यैव पश्येद् योगमेव वान्ववेक्ष्येति सौपर्णश्रुतौ दर्श-नात्। अनादिजन्मसम्बन्धं निर्भेत्तुं पापपञ्जरम्। या वत्या सेवया शक्यं तावत् कार्य्यं न संशयः। यावद्दूरे स्थितो गम्या तावद्गन्तव्यमेव हि। इह जन्मान्तरे वापि तावतैव तु दर्शनं श्रवणं मननञ्चैव निदिध्यासनमेव च। परे गुरौ च या भक्तिः परिचर्य्यादिकं हरेः। एषा सेवेति संप्रोक्ता यया तद्दर्शनं भवेदिति च बृहत्संहितायाम्॥५०॥

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

इति श्रीकृष्णद्वैपायनब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादविरचिते तृतीयाध्यायस्य चतुर्थपादः समाप्तः ।

---

## अथ चतुर्थोऽध्यायः ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

एवमेव प्रारब्धः कर्माभावे शरीरपातानन्तरमेव मोक्षस्तद्भावे जन्मान्तराणीत्यनियमः । धर्मी स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थो, मृतमेत्येव ब्रह्मसंस्थो मृतमेत्येवेति ब्रह्मसंस्थस्य मोक्षस्यैवावधारणात् । विद्वानमृतमाप्नोति नात्र कार्या विचारणा । अवसन्नं यदा सर्वं कर्म तत्रैव गच्छति । न चेह बहूनि जन्मानि प्राप्यैवान्ते न संशय इति नारायणाध्यात्मे ॥ ५१ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादविरचिते तृतीयाध्यायस्य चतुर्थः पादः समाप्तः

समाप्तश्च तृतीयोऽध्यायः ।

---

फलं निगद्य तस्मिन् ऽध्याये । कर्मणा प्राप्यं फल-

लिङ्गाच्च ॥ २ ॥

आत्मेतितूपगच्छन्ति ग्राहयन्तिच ॥ ३ ॥

न प्रतीकेन हि सः ॥ ४ ॥

अस्मिन् पादे नित्यशः कार्य्यं सर्वथा भाव्यं साधनं प्रथमतं उच्यते। प्रासङ्गिकत्वाच्चाध्यायानां पादानाञ्च न विरोधः। आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिना अग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः किन्त्वावृत्तिः कर्त्तव्या स य एषोऽणिमैतदात्म्यमिदं सर्वमित्याद्यसकृदुपदेशात् ॥ १ ॥

स तपोऽतप्यत पुनरेव वरुणं पितरमुपससारेत्यावर्त्तनलिङ्गाच्च नित्यशः श्रवणञ्चैव मननं ध्यानमेव वा कर्त्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिरिति बृहत्तन्त्रे ॥ २ ॥

आत्मेत्युपदेश उपासनञ्च मोक्षार्थिभिः सर्वदा कार्य्यमेव नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपासि आत्माहि ममैष भवतीत्युत्तयापगच्छसि आत्मेत्येवोपासस्व आत्मन्येव विजानीहि नान्यं किञ्चन विजानतो आत्मा ह्येष भवतीति ग्राहयन्ति च। आत्मेत्युपासनं कार्य्यं सर्वथैव मुमुक्षुभिः नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेदिति भविष्यत् पर्वणि। आत्मा विष्णुरिति ध्यानं विशिष्यतः। सर्वेषाञ्च मुमुक्षूणा मुपदेशश्च तादृशः। कर्त्तव्यो नास्य नानेन कस्यचिन्मोक्ष इष्यत इति ब्राह्मे ॥ ३ ॥

नाम ब्रह्मेत्युपासीतेत्यादिना ब्रह्मभावना न प्रतीके

ब्रह्म दृष्टिरुत्कर्षात् ॥ ५ ॥

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

ब्रह्म दृष्टिः कार्य्या किन्तु तत्स्थत्वेनैवोपासनं कार्य्यं ब्रह्मतर्के च नामादि प्राण पर्य्यन्तमुभयोः प्रथमात्वतः। ऐक्य-दृष्टिरिति भ्रान्तिरबुधानां भविष्यति। नामादि स्थिति-रेवात्र ब्रह्मणो हि विधीयते। सर्वथा प्रथमा यस्मात् सप्तम्यर्थात् ततो मतेति ॥ ४ ॥

ब्रह्मदृष्टिः सर्वथा कार्य्यैव परमेश्वरे उत्कृष्टत्वात्। ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम्। महत्ववाची शब्दोऽयं महत्वज्ञानमेव हि। सर्वतः प्रीतिजनकमतस्तत् सर्वथा भवेत्। आत्मेत्येव यदोपास्या तदा ब्रह्मत्वसं-युता। कार्य्यैव सर्वथा विष्णौ ब्रह्मत्वं न परित्यजेदिति ब्रह्मतर्के ॥ ५ ॥

चक्षोः सूर्य्योऽजायते त्याद्युपासनं च देवानां कार्य्यमेव स्वोत्पत्तिस्थानत्वात् स्वाश्रयत्वात् मुक्तौ तत्र लयस्यापेक्षि-तत्वाच्चोपपन्नं तेषां तथोपासनम्। नारायणतन्त्रे च। आधिव्याधि निमित्तेन विक्षिप्तमनसोऽपि तु। गुणानां स्मरणं शक्तौ विष्णोर्ब्रह्मत्वमेव तु। स्मर्त्तव्यं सततं तत्तु न कदाचित् परित्यजेत्। अत्र सर्वगुणानाञ्च यतोऽन्तर्भाव इष्यते। स्वोत् पत्त्यङ्गञ्च देवानां विष्णोश्चिन्त्यं सदैव तु। तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः। तदाश्रि-ताश्च ते नित्यं ततश्चिन्त्यं विशेषत इति ॥ ६ ॥

**आसीनः सम्भवात्॥ ७॥**

**ध्यानाच्च॥ ८॥**

**अचलत्वञ्चापेक्ष्य॥ ९॥**

**स्मरन्ति च॥ १०॥**

**यत्रैकाग्रता तत्राविशेषात्॥ ११॥**

सर्व्वदोपासनं कुर्व्वन्नप्यासीनो विशेषतः। कुर्य्यात्तदा वसन् विक्षेपाल्पत्वेन हि सम्भवात्॥ ७॥

स्मरणोपासनञ्चैव ध्यानात्मकमिति द्विधा। स्मरणं सर्व्वदा योग्यं ध्यानोपासनमासने। नैरन्तर्य्यं मनोवृत्ते-र्ध्यानमित्युच्यते बुधैः। आसीनस्य भवेत् तच्च न शयानस्य निद्रया। स्थितस्य गच्छतो वापि विक्षेपस्यैव सम्भवात्। स्मरणात् परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः। इति नारायणतन्त्रे। अतो ध्यानत्वाच्च॥ ८॥

अचलं चेच्छरीरं स्यात् मनसश्चाप्यचालनम्। चलने तु शरीरस्य चञ्चलं हि मनो भवेदिति ब्रह्माण्डे॥ ९॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः। संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् इत्यादि॥ १०॥

देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थात-व्यम्। तमेव देशं सेवेत तं कालं तमवस्थितम्। तानेव भोगान् सेवेत मनो यत्र प्रसीदति। नहि देशादिभि-

आप्रायणात् तत्रापि हि दृष्टम् ॥ १२ ॥

तदधिगम उत्तर पूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

कश्चिद्विशेषः समुदीरितः । मनः प्रसादनार्थं हि देशकालादिचिन्तनम् । इति वाराहे ॥ ११ ॥

यावन्मोक्षस्तावदुपासनादिकं कार्य्यं स यो ह वै तद्भगवन्मनुष्येषु प्रापणं तमोङ्कारमभिध्यायीतेति श्रुतिः । सर्वदैनमुपासीत यावद्विमुक्तिः मुक्ता अपि ह्येनमुपासत इति सौपर्णश्रुतिः । शृणुयाद् यावदज्ञानं मतिर्य्यावदयुक्तता । ध्यानञ्च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते । दृष्टतत्त्वस्य च ध्यानं यदा दृष्टिर्न विद्यते । भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा । आविमुक्तेर्विधिर्नित्यं स्वत एव ततः परमिति ब्रह्माण्डे ॥ १२ ॥

ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वाद् यस्य विनाशश्च । तद्यथा पुष्कर पलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म्मणैव श्लिष्यते तद्यथैषीका तूलमग्नौ प्रोतं प्रदूयेतैकं हैवास्य सर्वे पाप्मानः प्रदूयन्त इति तद्व्यपदेशात् ॥ १३ ॥

पुण्यस्याप्येवमश्लेषः । तुशब्दोऽनुत्थानवाची । यथा श्लेषो विनाशश्च मुक्तस्य तु विकर्म्मणः । एवं सुकर्म्मणश्चापि पततस्तमभिध्रुवमिति चाग्नेये ॥ १४ ॥

अनारब्ध कार्य्ये एवतु पूर्वे तदवधेः ॥ १५ ॥

अग्निहोत्रादितु तत् कार्य्यायैव तद्दर्शनात् ॥१६॥

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

अनारब्धकार्य्ये एव पूर्वे पुण्यपापे विनश्यतः। तस्य तावदेव चिरं यावन्न विमोक्ष्येत अथ संपत्स्यत इति तदवधेः। तुशब्दः स्मृतिद्योतकः। यदनारब्ध पापं स्यात्तद्विनश्यति निश्चयात्। पश्यतो ब्रह्मनिर्द्वन्दं हीनञ्च ब्रह्मपश्यतः। द्विषतो वा भवेत् पुण्य नाशो नास्त्यत्र संशयः। तस्याप्यारब्धकार्य्यस्य न विनाशोऽस्ति कुत्रचित्। आरब्धयोस्तु नाशः स्यादल्पयोः पुण्यपापयोरिति नारायणतन्त्रे ॥ १५ ॥

अग्निहोत्राद्यपि मोक्षानुभवायैव। तुशब्दाद् ब्रह्मदर्शनवतः स एनमाविदितेन भुनक्ति यथा वेदोवा नन्नुक्तोऽन्यद्वा कर्म्माकृतं यदि ह वा अप्यनेवं विन्महत् पुण्यं कर्म्म करोति तद्धास्यां ततः चीयत एवात्मानमेव लोकमुपासीत स यः आत्मानमेव लोकमुपास्ते न हास्य कर्म्म चीयते तस्मादेवात्मनो यद् यत् कामयते तत्तत् सृजत इति तद्दर्शनात् ॥ १६ ॥

मुक्तावनुभवकारणात् यदन्यत् पुण्यमपि नश्यति। अप्रारब्धमनभीष्टञ्च तथा ह्येकेषां पाठः उभयोस्त्यागेन तस्य पुत्रा दाय मुपयन्ति सुहृतः साधु कृत्यां द्विषन्तः पाप-

यदेव विद्ययेति हि ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥

इति श्रीकृष्णद्वैपायनकृत ब्रह्म सूत्रभाष्ये
श्रीमदानन्द तीर्थ भगवत् पाद
विरचिते चतुर्थाध्यायस्य
प्रथमः पादः समाप्तः ।

---

कल्पमिति। अनभीष्टमनारब्धं पुण्यमस्य विनश्यति। किमु पापं परब्रह्म ज्ञानिनो नास्ति संशय इति पाद्मे ॥१७॥

ब्रह्मदर्शी कृतमल्पमपि पुण्यं महत्तरमनन्तं च भवन्ति। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति श्रुतिः। न ह्यस्य कर्म्म चीयत इति च। अल्पमात्र कृतो धर्म्मो भवेज्ज्ञानवतो महान्। महानपि कृतो धर्म्मो ह्यज्ञानां निष्फलो भवेत् इति च भारते ॥ १८ ॥

आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म संपद्यते। अथेति नियमसूचकः। आरब्ध पुण्यपापस्य भोगेन क्षपणादनुप्राप्नोत्येव तमोघोरं ब्रह्मवा नात्र संशयः। ब्रह्मणा शतकालात्तु पूर्वमारब्ध संक्षयः। नियतेन भवेन्नात्र कार्य्या काचिद्विचारणा। इति नारायणतन्त्रे ॥ १९ ॥

—०—

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अतएव च सर्वाण्यनु ॥ २ ॥

तन्मनः प्राण उत्तरात् ॥ ३ ॥

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

देवानां मोक्ष उत्क्रान्तिश्चास्मिन् उच्यते। वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते। वाचो मनोवश्यत्वदर्शनात्। तस्य यावन्न वाङ्मनसि सम्पद्यत इति शब्दाच्च। उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः। तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्धि हीयत इति स्कान्दे ॥१॥

अतएव चशब्दात् सर्वाणि दैवतानि यथानुकूलं विलीयन्ते। अग्नौ सर्वे देवा विलीयन्ते अग्निरिन्द्रे इन्द्र उमायां उमा रुद्रे विलीयते। एवमन्यानि दैवतानि यथानुकूलमिति गोपवनश्रुतिः ॥ २ ॥

मनः प्राण इत्युत्तराद्वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठ इति कौण्डिन्यश्रुतिः ॥ ३ ॥

स प्राणः परमात्मनि विलीयते सर्वे प्राणमुपगच्छन्ति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति। प्राणः परस्यां देवतायां मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते। अग्निरिन्द्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु। आविश्य परमात्मानं भुङ्क्ते भोगांस्तु

भूतेष्वतः श्रुतेः ॥ ५ ॥

नैकस्मिन् दर्शयतो हि ॥ ६ ॥

समानाचासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

वाह्यकान्। नह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन। किंतु विष्णोः परानन्दो न ते विष्णाविति श्रुतिः। प्राणस्य तैजसितमो मार्गमात्रमुदाहृतम्। सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम्। इत्यादि श्रुतिस्मृतिभ्यः ॥ ४ ॥

भूतेष्वन्येषां देवानां लयः। भूतेषु देवा लीयन्ते भूतानि परेण परं उदेति नास्तमेत्येकक एव मध्ये स्थातेति बृहच्छ्रुतिः ॥ ५ ॥

नैकस्मिन् भूते सर्वेषां देवानां लयः पृथिव्यां सम्भवो देवाः विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्त ऋभवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुते आकाशे विनायका विलीयन्त इति महोपनिषच्चतुर्वेदशिखायाञ्च दर्शयतः। अतोऽग्नौ सर्वे देवा विलीयन्त इत्यत्र निर्दिष्टानामेव ॥ ६ ॥

देशतः कालतश्च व्याप्त्या समो नापरमः पुरुषो यस्याः सा समाना संसारानुपक्रमात् सृत एवामृतत्वं तस्याः बृहच्छ्रुतिश्च द्वौ वावसृत्यनुपक्रमौ। प्रकृतिश्च परमश्च द्वावेतौ

तदपीतेः संसारव्यपदेशात् ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

नोपमर्द्दनातः ॥ १० ॥

अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥

नित्यमुक्तौ नित्यौ च सर्वगतौ एतौ ज्ञात्वा विमुच्यत इति नैतावता साम्यम् ॥ ७ ॥

समावितौ। प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तावसमावितौ प्रकृतिश्च परमश्च विलीनौ हि प्रकृतौ संसारमिति विलीनः परमे ह्यमृतत्वमेतीति सौपर्णश्रुतिः ॥८॥

सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यञ्च। सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः। ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोरिति हि चतुरश्रुतिः ॥ ९ ॥

अतस्तस्य ये विशेषगुणास्तेषामनुपमर्द्दनेनैव साम्यम्। देशतः कालतश्चैव समा प्रकृतिरीश्वरे। उभयोरप्य बद्धत्वं तद्वश्यः परात्मनः। स्वत एव परेशस्य साचोपास्ते सदा हरिम्। प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना। नियतानैव केनापि नियता हि हरेर्गुणा इति भविष्यत्पर्वणि ॥१०॥

द्विधाहीदमवशस्य तदुष्मावदनुष्मावच्च। तत्रोष्मावत् परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति अथानुष्मावत् प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥

स्मर्य्यते च ॥ १४ ॥

तानि परे तथा ह्याह ॥१५॥

यन्न पश्यन्ति पश्यन्ति च यन्न शृखन्ति शृखन्ति च यन्न जानन्ति जानन्ति चेति सौपर्णश्रुतेः । किञ्चित् साम्योपपत्तेः ॥ ११ ॥

असमो वा एष परमो न हि कश्चिदेवं दृश्यते । सर्वे ह्येतेऽणवो जायन्ते च म्रियन्ते च छिद्रा ह्येते भवन्त्यथ परो न जायते न म्रियते पूर्णश्चैव भवतीति चतुर्वेदशिखायां साम्य प्रतिषेधादिति चेत् न शरीराद्धि साम्यं प्रतिषिध्यते ॥ १२ ॥

कुतः अथातः समाश्च समाश्चाभिधीयन्ते । समासमाश्चाय समानि ब्रह्मणो रूपाणि येरुत्पत्तिस्थितिलयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथा समाब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्येकेचन देवगन्धर्वा मनुष्याः पितरोऽसुरा यत् किञ्चेदं चरम् अचरञ्चाथ समाऽसमा प्रकृतिर्वाव समासमा एषा हि नित्याजरा तद्वशा चेति स्पष्टो हि माध्यन्दिनानां समादिवादः ॥ १३ ॥

मत्स्यकूर्म्मवराहाद्याः समा विष्णोरभेदतः । ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा इति वाराहे ॥ १४ ॥

प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते

अविभागो वचनात् ॥ १६ ॥

तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

सर्वे देवाः प्राणमाविश्य देवे मुक्तालयं परमे यान्त्य चिन्त्य इति कौषारवश्रुतिः ॥ १५ ॥

एते देवा एतमात्मानमनुविश्य सत्यासत्यकामाः सत्यसंकल्पाः यथा काममन्तर्बहिः परिचरन्तीति गोपवनश्रुतिः। तत् परमेश्वर कामाद्य विभागेनैव तेषां सत्यकामत्वं कामिन मे काम आगाद्धृदयाद्धृदयं मृत्योरिति वचनात्। मुक्तानां सत्यकामत्वं सामर्थ्यञ्च परस्य तु। कामानुकूल कामत्वं नान्यथैषां विधीयत इति ब्राह्मे ॥ १६ ॥

उत्क्रान्ति काले हृदयस्याग्रज्वलनं भवति तस्य हैतस्य हृदयस्याग्रं प्रद्योतत इति श्रुतेः। तत् प्रकाशितद्वारो निष्क्रामति विद्यासामर्थ्यात् यं यं चापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तन्तमेवैति कौन्तेय सदा तद्भावभावित इति स्मृते विद्याशेष गत्यनुस्मरण योगाच्च। आचार्य्यस्तु ते गतिं वक्तेति लिङ्गम्। हृद्दिस्थेनैव हरिणा तस्यैवानुग्रहेण तु उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेदिति चाध्यात्मे। शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैकातयोर्द्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्तीति च ॥ १७ ॥

रश्म्यनुसारी ॥ १८ ॥

निशि नेति चेन्न सम्बन्धात् ॥ १९ ॥

यावद्देहभावित्वाद्दर्शयति च ॥ २० ॥

अतश्चायनेऽपि हि दक्षिणे ॥ २१ ॥

निष्क्रामति सहस्रं वा आदित्यस्य रश्मयः आसुनाडीष्वा ततास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामी ततस्तत् प्रकाशेनैव निर्गच्छतीति हि पौत्रायण श्रुतिः ॥ १८ ॥

रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेत् न सर्वदा सम्बन्धाद्रश्मीनां कियत् कालम् ॥ १९ ॥

यावद्देहो विद्यते तावद्रश्मिसम्बन्धोऽस्त्येव सृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्त्तत इति माध्यन्दिनश्रुतिः ॥ २० ॥

दक्षिणे मरणयाति स्वर्गं ब्रह्मोत्तरायण इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते। यतं यश्चैव सूर्यस्य दक्षिणायन रश्मयः। तावन्त एव निर्दिष्टा उत्तरायण रश्मयः। ते सर्वे देहसम्बन्धाः सर्वदा सर्वदेहिनाम्। महर्लोकादिगन्तार उत्तरायणरश्मिभिः। निर्गच्छन्तीतरैश्चापि येरेष्व्येतरा गतिः। उत्तरं दक्षिणमिति त एव तु निगद्यते न तु काल विशेषोऽस्ति ज्ञानिनां नियमात्

योगिनः प्रति च स्मर्य्यते स्मार्त्ते चैते ॥ २२ ॥

इति श्रीकृष्णद्वैपायनब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थभगवत्पादविरचिते चतुर्थाध्यायस्य द्वितीयपादः समाप्तः।

---

फलम्। ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते। अप्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालत इति हि नारायणाध्यात्मे ॥ २१ ॥

न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्य्येते किन्तु ज्ञानयोगिनः कर्म्मयोगिनश्च।

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तत इति। अत्र योगीति विशेषणात् स्मरणनिमित्ते चैते गती गत्यनुस्मरणाद् ब्रह्मचन्द्रं वा गच्छति ध्रुवम्। अननुस्मरध्रुतः काले स्मरणं प्राप्य वै गतिरिति चाध्यात्मे ॥ २२ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये
श्रीमदानन्दतीर्थभगवत्पादविरचिते
चतुर्थाध्यायस्य द्वितीयपादः समाप्तः।

—०—

अर्चिरादिना तत् प्रथितेः ॥ १ ॥

वायुशब्दादविशेषविशेषाभ्याम् ॥ २ ॥

तड़ितोऽधिवरुणः सम्बन्धात् ॥ ३ ॥

मार्गो गम्यं चास्मिन् पाद उच्यते। तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह आपूर्य्यमाण पक्षमित्यर्चिषः प्राथम्यं श्रूयते। यथाहवै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छतीति वायोः। तत्रार्चिषप्राप्तिरेव प्रथमा। द्वावेव मार्गौ प्रथिता वर्चिरादिर्विपश्चिताम्। धूमादिः कर्म्मिणाञ्चैव सर्ववेद विनिर्णयात्। अग्निर्ज्योतिरितीद्धेवार्चिषः संप्रतिष्ठितः। अग्निर्गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन्निति। एकस्मिंस्तु परे संस्थो द्विरूपोऽग्नेः सुतो महनिति ब्रह्मतर्के ॥ १ ॥

अर्चिषो वायुं गच्छति स वायुमागच्छतीति सामान्यवचनात्। स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह आपूर्य्यमाणपक्षमिति विशेषवचनाच्च ॥ २ ॥

मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात् प्रजपतिलोकम् इति कौण्डिन्यश्रुतिः। संवत्सरात्तड़ितमागच्छति तड़ितः प्रजापतिलोकमिति गौपवनश्रुतिः। तत्र तड़ितो वरुणं गच्छति तड़िता ह्येते वरुणलोकस्तड़िदुपरि मुक्तामयो राजते। तथासौ वरुणो राजा सत्यानृते विचिन्वतीत्युपरि सम्बन्धश्रुतिः ॥ ३ ॥

आतिवाहिकस्तल्लिङ्गात् ॥ ४ ॥
उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥
वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥
कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

पूर्वोक्तस्त्वातिवाहिको वायुः पूर्वगमनलिङ्गात् ॥ ४ ॥

कुतः स वायुमागच्छतीति प्रथममुच्यते। उत्क्रान्तो विद्वान् परमसभिगच्छन् विद्युतमेवान्तत उपगच्छति। योर्वाव विद्युतस्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छतीत्यत्तोऽपि वायुगमनश्रुतिः। पूर्वोक्तः आतिवाहिकः परो वेति व्यामोहे उत्तरे दिवसपतिरिति विशेषणात् पूर्वोक्तातिवाहिकस्यैव श्रुति सिद्धेः। ब्रह्मतर्के च। उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु। ततो हि वायोः पुत्रश्च यो सौ नाम्नातिवाहिकः। ततोहः पूर्वपक्षं वाह्युदक् संवत्सरं तथा। तड़ितं वरुणञ्चैव प्रयाजं सूर्य्यमेव च। सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा। ततो वायुं परं प्राप्य तेनैति पुरुषोत्तममिति ॥ ५ ॥

प्रकारान्तरेण तत्र तत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग् गन्तव्योऽस्तीति नाशङ्कनीयं विद्युत्पतिना वायुनैव स एतान् ब्रह्म गमयतीति ब्रह्मगमनश्रुतेः विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः। कुतोऽन्यस्य भवेच्छक्तिस्सृते प्राणनायकमिति बृहत्तन्त्रे ॥ ६ ॥

स एवाणु ब्रह्म गमयतीति कार्य्यं ब्रह्मगमयतीति

विशेषितत्वाच्च ॥ ८ ॥

सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

कार्य्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥

बादरिर्मन्यते । ऋते देवात् परं ब्रह्म कः पुमान् प्राप्नुयात् । क्वचित् । यद्यपि ब्रह्मदृष्टिः स्याद्ब्रह्मलोकमवाप्नुयादित्यध्यात्मवचनात् । तस्यैव गत्युपपत्तेः ॥ ७ ॥

यदिह वा परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखमिति कौषारवश्रुतेः ॥ ८ ॥

ब्रह्मविदाप्नोति परमिति तद्व्यपदेशस्तत्समीप एव परमपि प्राप्नोतीत्येतदर्थमेव ॥ ९ ॥

कदेत्यत आह ते हि ब्रह्मणा अभि सम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभि गच्छतीति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छति ॥ १० ॥

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्यान्ते परात्मानः प्रविशन्ति परं पदमिति च ॥ ११ ॥

ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

न च कार्य्ये प्रतिपत्त्यभिसन्धिः ॥ १४ ॥

अप्रतीकालम्बनान्नयतीति स बादरायण उभयथा च दोषात्तत् क्रतुश्च ॥ १५ ॥

दृष्टत्वाच्च परब्रह्मणः ॥ १३ ॥

न हि कार्य्ये प्रतिपत्तिः प्राप्तवान् इत्यभिसन्धिश्च। यदुपास्ते पुमान् जीवन् यत् प्राप्तुमभिवाञ्छति। यत्र पश्यति दृशः संस्तत् प्राप्नोति स्रुतेरन्विति पाद्मे ॥ १४ ॥

प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम्। न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते। अप्रतीका देवतास्तु ऋषीणां शतमेव च। राज्ञाञ्च शतमुद्दिष्टं गन्धर्वाणां शतं तथा। एते ऽधिकारिणो व्याप्तिदर्शने ऽन्येन तु क्वचित्। अयोग्यदर्शने यत्नाद भ्रंशः पूर्वस्य चापि तु। अप्रतीकाश्रया ये हि ते यान्ति परमेव तु। स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद्ब्रह्म स लोकताम्। ब्रह्मणा सह संप्राप्ते संहारे परमं पदमिति मार्कण्डवचनात्। उभयलोकदोषात् प्रतीकालम्बनात् परं नयति। स यथा कामो भवति तत् क्रतुर्भवति यत् क्रतुर्भवति तत् कर्म्म कुरुते यत् कर्म्म कुरुते तदा संपद्यत इति श्रुतेश्च अत्र कर्मोपासनमेव अन्यान् कार्य्यं नयतीति भगवन्मतम् ॥ १५ ॥

विशेषञ्च दर्शयति ॥ १६ ॥

इति श्रीकृष्णद्वैपायनब्रह्मसूत्रभाष्ये श्रीमदानन्द-
तीर्थभगवत्पादविरचिते चतुर्थाध्यायस्य
तृतीयपादः समाप्तः ।

---

सम्पाद्याविर्भावः स्वेन शब्दात् ॥१॥

अन्तःप्रकाशाद्बहिःप्रकाशाः सर्वप्रकाशाद्वै वाव सर्वे प्रकाशा ऋषयोऽन्तः प्रकाशा मनुष्या एवहि बहिःप्रकाशा इति चतुर्वेदशिखायाम् ॥ १६ ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदा-
नन्दतीर्थभगवत्पादविरचिते चतुर्थाध्यायस्य
तृतीयपादः समाप्तः ।

---

भोगमाहात्म्यस्मिन् पादे स एवं विद्वेरमन्वानः एवं पश्य-न्नात्मानमभिसंपद्येत तेनात्मना यथा कामं सर्वान् कामा-ननुभवतीति सौपर्णश्रुतेः परं ज्योतिरुपसम्पद्य स्वेन रूपे-णाभितिष्ठत इति च । एवं सेतुं तीर्त्वान्धः सन्नानन्दी भवतीति च तत्र तरणम् नाम तत् प्राप्तयेऽन्यतरणमेव। इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यति नैव सेतुना मोदते प्रमोदत आनन्दी भवतीति मोक्षव्यश्रुतेः ॥ १ ॥

मुक्तः प्रतिज्ञानात् ॥ २ ॥

आत्मा प्रकरणात् ॥ ३ ॥

अविभागेनैव दृष्टत्वात् ॥ ४ ॥

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

मुक्त एव चात्रोच्यते। अहरहरेन मनु प्रविशत्युपसंक्रमते च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यथैनं मुक्तो ऽनुप्रविशति मोदते प्रमोदते च कामांश्चैवान् भवतीति बृहच्छ्रुतौ च प्रतिज्ञानात् ॥ २ ॥

परं ज्योतिःशब्देन परमात्मैवोच्यते तत् प्रकरणत्वात्। परं ज्योतिः परं ब्रह्म परमात्मादिका गिरः। सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चनेति ब्रह्माण्डे ॥ ३ ॥

ये भोगाः परमात्मना भुज्यन्ते त एवमुक्तैर्भुज्यन्ते। यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्तीति दृष्टत्वाच्चतुर्वेदशिखायाम्। भविष्यत्पुराणे च। मुक्ताः प्राप्य परं विष्णुं तद्भोगान्लेशतः क्वचित्। वहिष्ठान् भुञ्जते नित्यं नानन्दादीन् कथञ्चनेति ॥ ४ ॥

सर्वदेह परित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान् भुञ्जत इति जैमिनिर्मन्यते स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमभिसृज्य ब्रह्माभिसंपद्य ब्रह्मणा पश्यति

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः॥६॥**

**एवमप्युपन्यासात् पूर्वभावादविरोधं वादरायणः॥ ७॥**

ब्रह्मणा शृणोति ब्रह्मैवेदं सर्वमनुभवतीति माध्यन्दिनाय-न श्रुता वुपन्यासात्। आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति। गच्छेच्च हरिपादेन मुक्तस्यैषा भवेत् स्थिति-रिति स्मृतेः। गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या तु दर्शनम्। इत्यादि पूर्वस्मरणा स्मरणान्मुक्तस्यैतद्भविष्यतीति बृहत्तन्त्रोक्तयुक्तेश्च॥ ५॥

चितिमात्रो देहो मुक्तानां पृथग्विद्यते तेन भुङ्क्ते। सर्वं वा एतदचित् परित्यज्य चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षत इत्युद्दालक श्रुतेश्चिदात्मकत्वादित्यौडुलो-मिर्मन्यते॥ ६॥

स वा एष एतस्मान्मर्त्त्या द्विमुक्तश्चिन्मात्रो भवति अथ तेनैव रूपेणाभिपश्यत्यभिशृणोत्यभिमनुतेऽभिजानाति तामाहुर्मुक्तिमिति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जै-मिन्युक्तस्य च भावादुभयदर्शनाविरोधं वादरायणो मन्यते नारायणाध्यात्मे च। मर्त्त्यदेहं परित्यज्य चितिमात्रात्म-देहिनः। चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम्। तदाज्ञानुगृहीतेश्च स्वाङ्गैरेव प्रवर्त्तनम्। कुर्वन्ति भुञ्जते भोगांस्तदनु वहिरेव वा। यथेष्टं परित्तिन्ते तस्यैवानुग्रहे-रिता इति॥ ७॥

सङ्कल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

अतएव चानन्याधिपतिः ॥ ९ ॥

अभावं बादरिराह ह्येवम् ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

न तेषां भोगादिषु प्रयत्नापेक्षा स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति श्रुतेः ॥ ८ ॥

सत्यसंकल्पत्वादेव परमोऽधिपतिस्तेषां विष्णुरेव न संशयः । ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः । ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् । आचार्य्याश्चैव सर्वेऽपि येज्ञानं सुप्रतिष्ठितम् । एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशय इति च वाराहे ॥ ९ ॥

चिन्मात्रं विनान्यो देहस्तेषां न विद्यते इति बादरिः । अशरीरो वा तदा भवत्यशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतायाभ्यां ह्येष उन्मथ्यत इत्येवं कौरव्यश्रुतावाह हि ॥ १० ॥

स वा एष एवं वित् परमभिपद्यत्यभिशृणोति ज्योतिषैव रूपेण चित्तावाचित्तावानित्येन वाचा नन्दी ह्येवैष भवति मानन्दं किञ्चिदुपस्पृशति इत्यौद्दालकश्रुतौ विकल्पामननात् । अन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥ ११ ॥

यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति । एवं-

**तत्वभावे सन्ध्यावदुपपद्यते ॥ १३ ॥**

**भावे जाग्रद्वत् ॥ १४ ॥**

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

**स्वाप्ययसम्पत्त्योरन्यतरापेक्ष्यमाविष्कृतं हि ॥१६**

मुक्तभोगो वाह्यशरीरकृतश्चिन्मात्र कृतश्च भवतीति वादरायणो मन्यते ॥ १२ ॥

उपपत्तिश्च सन्ध्यं स्वप्नः सन्ध्यं तृतीयं स्वप्नस्थान मितिश्रु : ॥ १३ ॥

ब्रह्म वैवर्त्तेच । स्वप्नस्थानां यथाभोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद्विना देहेन भोजनम् । स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् स्वीकृत्य जागरितवद्भुक्त्या त्यागः कदाचन इति ॥ १४ ॥

शरीर मनु प्रविश्यापि तत् प्रकाशयन्तः पुरुषानेव भोगाननुभवन्ति नतु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्ट स्तत्स्थं तैलाद्येव भुङ्क्ते नतु तत् काष्ठादि तीर्णोहि तदा सर्वान् शोकान् हृदयस्य भवतीति दर्शयति ॥ १५ ॥

न च स्वर्गे लोके न भयं किञ्चनास्तीत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः सुप्तौ मोक्षेवा एतदुच्यते अत्र पिता पिता भवति अनन्वागतं पुण्येना नन्वागतं पापेन इत्याद्याविष्कृतत्वात् ब्रह्मवैवर्त्तेच । ज्योति र्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः । भुञ्जते सुसुखान्येव न

जगद्व्यापारवर्ज्जम् ॥ १७ ॥

प्रकरणादसन्निहितत्वाच्च ॥ १८ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्योक्तेः ॥ १९ ॥

दुःखादीन् कदाचन तीर्णाहि सर्वशोकान्ते पुण्यपापादि वर्जिताः । सर्वदोष निवृत्तास्ते गुणमात्र स्वरूपिणः इति ॥ १६ ॥

सर्वान् कामानाप्यामृतः समभवदित्युच्यते तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारानाप्नोति ॥ १७ ॥

कुतः । जीवप्रकरणत्वाज्जीवानां तादृक् सामर्थ्य विरहत्वाच्च । वाराहे च । स्वाधिकानन्द संप्राप्तौ सृष्ट्यादिव्यापृतिष्वपि । मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते । तद्योग्यता नैव तेषां कदाचित् क्वापि विद्यते। न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेदिति ॥ १८ ॥

योवेद सवेद ब्रह्म सर्वस्मै देवा बलिमावहन्तीति प्रत्यक्षोपदेशात् जगदैश्वर्य्य मप्यस्तीति चेत् न आधिकारिक मण्डलाधिपति र्ब्रह्माहि तत्रोच्यते । गारुडेच । आलेत्येव परं देव मुपास्यं हरिमव्ययम् । केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन । अत्रैव च स्थिति स्तेषा मन्तरीक्षे च केचन । केचित्स्वर्गे महर्लोके जने तपसि चापरे । केचित् सत्ये सत्यज्ञाना गच्छन्ति क्षीरसागरम् । अत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः सालोक्यञ्च सरूपत्वं सामी-

विकारावर्त्ति च तथा हि स्थितिमाह ॥ २० ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २१ ॥

ध्यं योग एव च। इदमारभ्य सर्वत्र यावत् सुचीर साग-रम्। पुरुषोऽनन्त शयनः श्रीमन्नारायणाभिधः। मानुषा वर्णभेदेन तथैवाश्रमभेदतः। भूपा मनुष्या गन्धर्वा देवाश्च पितरश्चिराः। अज्ञानजाः कर्मजाश्च तात्त्विकाश्च शची-पतिः। रुद्रो ब्रह्मेति क्रमश स्तेषु चैवोत्तमोत्तमाः। नित्यानन्दे च भोगेच ज्ञानैश्वर्य्ये गतिषु च। सर्वे शतगुणो-द्रिक्ताः पूर्वस्मा दुत्तरोत्तरम्। पूज्यन्ते चावरैस्तेतु सर्वैः पूज्यश्चतुर्मुखः। स्वजगद्व्यापृतिस्तेषां पूर्ववत् समुदीरिताः। सयुजः परमात्मानं प्रविश्य च वहिर्गताः। चिद्रूपान् प्राकृतां-श्चापि विना भोगां स्तु कांश्चन। भुञ्जते मुक्ति रेवैते विस्पष्टाः समुदीरिता इति ॥ १९ ॥

विकारावर्त्ती व्यापारो मुक्तानां न च विद्यते। इमं मान मावर्त्तं नावर्त्तन्त इति श्रुतिः। वाराहे च। स्वाधि-कारेण वर्त्तन्ते देवा मुक्तावपि स्फुटम्। वलिं हरन्ति मुक्ताय विरिञ्चाय च पूर्ववत्। स ब्रह्मकास्तु ते देवा विष्णवे च विशेषतः न विकाराधिकारन्तु मुक्तानामन्य एव तु। विकाराधि कृता ज्ञेया ये नियुक्तास्तु विष्णुनेति ॥ २० ॥

एतत् साम गायन्नास्त इत्युच्यते। तत्रानन्दादीनां वृद्धिर्ह्रासश्च न विद्यते। एक प्रकारेणैव सर्वदा स्थितिः। स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते म्रियते न हीयते

भोगमात्र साम्यलिङ्गाच्च ॥ २२ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २३ ॥

न वर्द्धते स्थित एव सदा भवति। दर्शयन्नेव ब्रह्म दर्शयन्नेवात्मानं तस्यैवं दर्शयतो न पत्ति र्न विपत्ति रित्याह जावालि श्रुतौ। यत्र गत्वा न म्रियते यत्र गत्वा न जायते न हीयते यत्र गत्वा न वर्द्धते इति मोक्ष धर्मे। विद्वत् प्रत्यक्षात् कारणाभावलिङ्गाच्च। ब्रह्म वैवर्त्तेच। न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् विद्वत्प्रत्यक्ष सिद्धत्वात् कारणा भावतोऽनुमा। हरेरुपासना चात्र सदैव सुखरूपिणी। ननु साधन भूता सा सिद्धि र्वात्र साध्यत इति ॥ २१ ॥

न च भोग विशेषादिति विरोधः। एतमानन्दमयमात्मानमनु प्रविश्य न जायते न म्रियते न ह्रसते न वर्द्धते यथा कामञ्चरति यथाकामम्पिबति यथा कामं रमते यथा काममुपरमते इति भोग मात्र साम्य लिङ्गात्। अवृद्धि ह्रास रूपत्वं मुक्तानां प्रायिकं भवेत्। कादाचित्कविशेषस्तु नैव तेषां निषिध्यत इति कौर्मे। प्रवाहतस्तु वृद्धिर्वा ह्रासोवा नैव कुत्रचित्। नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित्। कुत एव तु दुःखं स्यात सुखमेव सदोदितम्। भोगानान्तु विशेषेतु वैचित्र्यं लभते क्वचिदिति नारायण तन्त्रे ॥ २२ ॥

न च पुन रावर्त्तते न च पुन रावर्त्तते। सर्वान् कामानाप्त्वामृतः समभवत् समभवदित्यादि श्रुतिभ्यः ॥ २३ ॥

ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।
नमोऽस्तु गुरवे नित्यं सर्वथाति प्रियाय मे ।
यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलम् ।
भक्त्या दर्शितमित्यमेव निहितं देवस्य भर्गोमहत् ।
वायोरात्म वचोनयं प्रथमकं ह्यसौ द्वितीयं वपु-
र्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेनहि ॥

इति श्रीकृष्णद्वैपायनकृतब्रह्मसूत्रभाष्ये श्रीमदानन्दतीर्थ भगवत्पाद विरचिते चतुर्थाध्यायस्य चतुर्थपादः समाप्तः समाप्तश्च चतुर्थोऽध्यायः ।

समाप्तम्

---

প্রিণ্টর শ্রীক্ষেত্রমোহন মুখোপাধ্যায়
নং ২৭ বারাপুকুর লেন।

५९ बृहदारण्यक सटीक सभाष्य १२
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशतिः ।॥
६३ पातञ्जलदर्शन (सभाष्यसटीक) ४
६४ आत्मतत्त्वविवेक (बौद्धाधिकार) २
६५ मुक्तिकोपनिषत् ⁄
६६ उपमान चिन्तामणि ।॰
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् सभाष्य २
६९ चन्द्रशेखरचम्पू काव्य १
७० सामवेदस्य मन्त्र ब्राह्मणम्
(भाष्य सहितम्) २
७१ सामवेदस्य आरण्यसंहिता
सायणाचार्य्य कृत भाष्यसहिता १
७२ विद्धशालभञ्जिकानाटिका सटीक १
७३ कारण्डव्यूह (बौद्धशास्त्र) २
७४ कुवलयानन्द अलङ्कारसटीक १
७५ प्रियदर्शिका नाटिका सटीक ॥
७६ सारस्वत व्याकरण सटीक
पूर्वार्द्धम् १।
७७ वासवदत्ता सटीक २
७८ ( कालिदास कृत ) पुष्पबाण-
विलास काव्य सटीक ॥
७९ भक्तिप शतकम्, पद्मारविन्द-
शतकम्, स्तुतिशतकम्, मन्द-
स्मितशतकम्, कटाक्षशतकम् १
८० मनुसंहिता टीका सहित ५
८१ नैषधचरितम् टीका सहित १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥
८३ वीरमित्रोदय (स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक (मुरारिकृत) २
८७ दैवतब्राह्मणसभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसा परिभाषा ।॰
९० अर्थसंग्रह (लौगाक्षीमीमांसा ।॰
९१ रघुवंश सटीक १॥॰
९२ मेघदूत सटीक ॥॰
९३ कथासरित्सागर ८
९४ ईश्वरानुमानचिन्तामणि
(गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २॥
९६ सटीक वाल्मीकिरामायण
बालकाण्डस्य प्रथमादधि
सप्तषष्टि सर्गपर्य्यन्तम्
९७ सटीक वाल्मीकिरामायण
बालकाण्डस्य अष्टषष्टि सर्गावधि
सप्तसप्तति सर्ग पर्य्यन्तम् २
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः ⁄
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः ।॰
१०१ साहित्यदर्पणम् (अलङ्कार) १॥॰
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ॥॰
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत
शारीरकभाष्य तथा गोविन्दानन्द-
कृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसारसटीक १
१०७ सटीक निदान (वैद्यक) ४

कलिकाता संस्कृतविद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द विद्यासागर-भट्टाचार्य्य-महाशयात् लभ्यानि।